C. 6. 1818
B. 6. 47. 9
K. 6. 47. 9

भीष्मेण युयुधे वीरस्तस्य चानुचरैः सह ॥ ९
कृतवर्माणमेकेन शल्यं पञ्चभिरायसैः ।
विद्धा नवभिरानर्छच्छिताग्रैः प्रपितामहम् ॥ १०
पूर्णायतविसृष्टेन सम्यक्प्रणिहितेन च ।
ध्वजमेकेन विव्याध जाम्बूनदविभूषितम् ॥ ११
दुर्मुखस्य तु भल्लेन सर्वावरणभेदिना ।
जहार सारथेः कायाच्छिरः संनतपर्वणा ॥ १२
धनुश्चिच्छेद भल्लेन कार्तस्वरविभूषितम् ।
कृपस्य निशिताग्रेण तांश्च तीक्ष्णमुखैः शरैः ॥ १३
जघान परमक्रुद्धो नृत्यन्निव महारथः ।
तस्य लाघवमुद्वीक्ष्य तुतुषुर्देवता अपि ॥ १४
लब्धलक्ष्यतया कार्ष्णेः सर्वे भीष्ममुखा रथाः ।
सत्त्ववन्तममन्यन्त साक्षादिव धनंजयम् ॥ १५
तस्य लाघवमार्गस्थमलातसदृशप्रभम् ।
दिशः पर्यपतच्चापं गाण्डीवमिव घोषवत् ॥ १६
तमासाद्य महावेगैर्भीष्मो नवभिराशुगैः ।
विव्याध समरे तूर्णमार्जुनिं परवीरहा ॥ १७
ध्वजं चास्य त्रिभिर्भल्लैश्चिच्छेद परमौजसः ।

---

9 Da1 missing. —$^{a}$) K0.1 D6 तालकेतुस्. D1 अभिमन्युस्तु तीक्ष्णेन; S स ता( M3.5 का )लकेतुना कार्ष्णिः. —$^{b}$) K5 केतुना हतपत्रिणा; S समासाद्य महारथः ( T2 °रथान् ). —$^{c}$) K1 वीरास्. —$^{d}$) K4 चाश्वरथैः; Dn D4.7.8 T2 M चानुरथैः. K3 D2.6 योधैश्चैवापरैस्त- ( K3 °रैः स )दा.

10 Da1 missing. —$^{b}$) K0–2 D1.3 S °भिराशुगैः. —$^{c}$) B Da2 Dn D4.5.7.8 भित्त्वा ( for विद्धा ). Ś1 K0–2 D3 आनर्छ ( for आनर्छत् ). —$^{d}$) Dn D4 शराग्रैः; D5 शताग्रैः; M2 छित्वाग्रैः.

11 Da1 missing. —$^{a}$) = 32$^{a}$. Ś1 पूर्णयात°; Cd पूर्वायत°; Cc as in text. —$^{b}$) K0–2 विनिहतेन; Cc प्रणिहितेन (as in text). —$^{c}$) D2.4.7 चिच्छेद (for विव्याध ). —$^{d}$) Ś1 K1 °विभूषितान्; D3.8 °परिष्कृतं.

12 Da1 missing. K0 om. ( hapl. ) 12$^{a}$–13$^{b}$. —$^{a}$) M2 दुर्मनस्य. D1 च ( for तु ). K1 बलेन. — K1 om. ( hapl. ) 12$^{b}$–13$^{a}$. —$^{b}$) D8 T1 सर्वाभरण°; T2 क्रुद्धो रमण°. —$^{d}$) K2 D4.7.8 °पर्वभिः; K5 °पर्वणः. — After 12, S ins.:

149* विविंशतिस्त्रिभिर्बाणैः सर्वावरणभेदिभिः ।
[ T1 G विविंशतेस्. ]

13 Da1 missing. K0 om. 13$^{ab}$; K1 om. 13$^{a}$ ( cf. v. l. 12 ). —$^{a}$) Ś1 बल्लेन; T2 M1.3.4 चैकेन; G2 फल्लेन ( for भल्लेन ). —$^{b}$) = 44$^{b}$. K5 सर्वावरणभेदिना ( = 12$^{b}$ ); D1 जातरूपविभूषितं; S भित्त्वा वक्षसि चानदत् ( T2 मानदं ). Cc cites कार्त्तस्वरेण. —$^{c}$) S ( except T2 ) °ग्रैस्तु ( for °ग्रेण ). —$^{d}$) K2 तैश्च; S हयांस् ( for तांश्च ). S तीक्ष्णज( G2 M °र )वैः; Cv °मुखैः ( as in text ). D1.8 सर्वांश्च निशितैः शरै:

14 Da1 missing. —$^{a}$) K4 S ( except M[illegible] ) समरे; Dn2 परमः; D8 परमं ( for परम- ). —$^{b}$) K1.2 D8 ( before corr. ) G3 नृत्यंतीव. B3 महारे[illegible] D1 महारथान्. —$^{c}$) S आलक्ष्य ( M4 °साद्य ) (for उद्वीक्ष्य ). —$^{d}$) K3.5 Da2 D1.2.6 T G2–4 तुतुशु[illegible] ( for तुतुषुर् ). T1 M1.2.4 दैवतान्यपि; T2 G1[illegible] M3.5 देवतान्यपि.

15 Da1 missing. —$^{a}$) K2.5 B Da2 D1.[illegible] T1 G M Cc लब्धलक्ष°. B3 D8 कार्ष्णिः; Cc कार्ष्णे ( as in text ). Ś1 K0.1 लब्ध( K0 लंब )पुंल[illegible] शौरेः; K3 D2.6 लब्धं लक्ष( D6 °ब्धलक्ष्य )तया शौ[illegible] K4 लब्धलक्षतमाः शौरेः; T2 लब्धलक्षं तु कार्ष्णेयं. C[illegible] cites शौरिः. —$^{b}$) K3 D2.6 समं ( for सर्वे ). —$^{c}$) तथा; D1 S च ते; D8 नृपाः ( for रथाः ). —[illegible] D8 शूरमेकम्; Cc सत्त्ववन्तम् ( as in text ). Ś1 सत्[illegible] वंतः समन्यंत ( sic ). —$^{d}$) K5 धनंजयः.

16 Da1 missing. —$^{a}$) D8 तस्य तल्लाघवाद्[illegible] —$^{b}$) K4 तमालसदृश°. Cc cites अलातं. —$^{c}$)[illegible] K1 परिपतंश्; K0.3 D2 परिपतच्; D6 प्रतिपतच्[illegible] Cc पर्य° ( as in text ). K4.5 चापि ( for चापं ). [illegible] दिशश्च पर्यतच्चापं. —$^{d}$) K5 D2.6 गांजीवस्. सर्वशः ( for घोषवत् ).

17 Da1 missing. —$^{a}$) K2 B Da2 Dn D1.[illegible] स तमासाद्य वेगेन; S तमुद्यंतं ( T2 G2 °द्यंत-; M1-4 °द्यत-; M4 °द्यतं ) महावेगैर्. —$^{b}$) S ( except M[illegible] ) दशभिर् ( for नवभिर् ). Ś1 K5 आयसैः ( for आशुगैः ). —$^{c}$) Da2 D5 हंतुम्; S ( except M4 ) वीरम् ( for तूर्णम् ). —$^{d}$) Ś1 G3 अर्जुनिं; K0 आर्जुनिः; K[illegible] आर्जुनं.

सारथिं च त्रिभिर्बाणैराजघान यतव्रतः ॥ १८
तथैव कृतवर्मा च कृपः शल्यश्च मारिष ।
विद्धा नाकम्पयत्कार्ष्णिं मैनाकमिव पर्वतम् ॥ १९
स तैः परिवृतः शूरो धार्तराष्ट्रैर्महारथैः ।
ववर्ष शरवर्षाणि कार्ष्णिः पञ्चरथान्प्रति ॥ २०
ततस्तेषां महास्त्राणि संवार्य शरवृष्टिभिः ।
ननाद बलवान्कार्ष्णिर्भीष्माय विसृजञ्शरान् ॥ २१
तत्रास्य सुमहद्राजन्बाह्वोर्बलमदृश्यत ।
यतमानस्य समरे भीष्ममर्दयतः शरैः ॥ २२
पराक्रान्तस्य तस्यैव भीष्मोऽपि प्राहिणोच्छरान् ।
स तांश्चिच्छेद समरे भीष्मचापच्युताञ्शरान् ॥ २३
ततो ध्वजममोघेषुर्भीष्मस्य नवभिः शरैः ।
चिच्छेद समरे वीरस्तत उच्चुक्रुशुर्जनाः ॥ २४
स राजतो महास्कन्धस्तालो हेमविभूषितः ।
सौभद्रविशिखैश्छिन्नः पपात भुवि भारत ॥ २५
ध्वजं सौभद्रविशिखैः पतितं भरतर्षभ ।
दृष्ट्वा भीमोऽनदद्धृष्टः सौभद्रमभिहर्षयन् ॥ २६
अथ भीष्मो महास्त्राणि दिव्यानि च बहूनि च । C. 6. 1834 B. 6. 47. 27 K. 6. 47. 27

18 Da1 missing. — $^a$) T1 G बाणैश् ( for भल्लैश् ). — $^b$) Ś1 K0. 1. 3. 4 D2. 3. 6 बिभेद; K5 विव्याध ( for चिच्छेद ). K5 Da2 D5 T2 G1. 3 M पर- मो( M1. 3 °मो )जला; D1 परमास्त्रवित्. — $^c$) M4 भल्लैर् ( for बाणैर् ). — $^d$) K1 इतव्रतः; D1 महारथं; S महाव्रतः.

19 Da1 missing. — $^a$) Ś1 K0-2 Dn D4. 7. 8 तु ( for च ). — $^b$) S दुर्मुखः ( for मारिष ). — After 19$^{ab}$, S ins.:

150* विविंशतिस्तथा राजन्सर्वे विद्धा महारथाः ।

[ M1-3. 5 transp. सर्वे and विद्धा. ]

—$^c$) S तथा ( for विद्धा ). Ś1 न कंपयात्; D1 ना- कंपते; D3 न कंपयन्; T1 G2. 4 नाकंपयन्. Ś1 K0. 1 सूरं; K2 कार्ष्णीं; K3. 5 शौरिं; D1 T2 G2 M3 Cd कार्ष्णिर्; D3 शौरिर्; D6 सौरिं; Cv कार्ष्णि ( as in text ). — $^d$) D1 T2 G2 मैनाक इव पर्वतः.

20 Da1 missing. — $^a$) D1 शरैः ( for स तैः ). K4 S ( except M5 ) परिवृतैः. D1 S शूरैर् ( for शूरो ). —$^b$) K3 D6 महाबलः; B4 °रथे. — $^d$) G3 °शरान् ( for °रथान् ).

21 Da1 missing. — $^a$) K4 D3 सहस्राणि. —$^b$) Ś1 K2 स वार्यं; Dn निवार्य; D1 संछाद्य. — $^c$) K2. 5 B Da2 Dn2 D3-5 Cc बलवत् ( for बलवान् ). —$^d$) Ś1 K0. 1. 3 D2. 6 [अ]वसृजन् ( for विसृजन् ). K5 भीष्मो यावत्सृजञ्छरान्.

22 Da1 missing. — $^a$) D6 यत्रास्य. S सौभद्रस्य तदा राजन्. — $^c$) S यतमानं महेष्वासं. — Ś1 om. ( hapl. ) 22$^d$-23$^a$. — $^d$) K0. 1 Da1 Dn2 D3 T2 G1. 3 M2 मर्दयतः; Cc अर्पयतः ( for अर्दयतः ).

23 Ś1 om. 23$^{abc}$ ( cf. v. l. 22 ). — $^a$) T2 परि- क्रांतस्य. K1-3 D2. 3. 6-8 तस्यैवं; B2 तत्रैव. D1 दृष्ट्वा पराक्रमं तस्य; G3 पराक्रमं तस्य तस्यैव ( hypermetric ). — $^b$) B2 T1 G2-4 M3. 5 भीष्मो हि. B3 प्राहनत् ( for प्राहिणोत् ). — K3 D2. 6 M4 om. ( hapl. ) 23$^{cd}$. — $^d$) K4 सितान्; T2 शरैः ( for शरान् ).

24 $^a$) K0-3 Da1 Dn1 D2. 6. 8 T1 G1. 4 M1-3 अ- मोघेषु ( T1 G4 °षुं ); D1 अमोघैस्तु; T2 महाघोरं ( for अमोघेषुर् ). — $^c$) B2 भीष्मस्य ( for चिच्छेद ). K2. 3 वीर. — $^d$) K0. 1 तस्य वै चुक्रु°; K3 ततस्तचुक्रु°; K5 ततश्चोचुक्रु°; G3 त ऊचुश्चुक्रु°.

25 T1 reads ( *sec. m.* ) 25$^a$-26$^b$ on marg. — $^a$) Ś1 शराहतो; K4 स राजन्सु-; K5 स राजानो ( for स राजतो ). — $^b$) D3 हेमपरिस्कृतः. — $^c$) K5 छिन्नं; Da T2 G1. 2 M2. 5 भिन्नः ( for छिन्नः ). K3 D2. 6 कृत्तः सौभद्रविशिखैः. — $^d$) T1 G4 पतितो; G2 पातितो ( for पपात ).

26 $^a$) D1. 3 तं तु; S तं च ( for ध्वजं ). — $^b$) Ś1 पततं; K ( except K5 ) B Da Dn D2. 4-7 पतंतं; D1. 8. 3 G2. 3 M5 पातितं. Da1 D4. 7 भरतर्षभः; D1 भुवि भारत. — $^c$) Da1 D1. 6 भीष्मो ( for भीमो ). K3 B1. 2 D2. 6 नदन्हृष्टो; D1. 3 S ननादोच्चैः. — $^d$) K2 सुभद्रम्. D1 अभिमर्षयन्; D2 अपि हर्ष°; T G अभि( G3 °पि )पाल°.

27 $^a$) D1 S स्वयं ( M स्वयन् ) राजन् ( for महा- स्त्राणि ). — Da1 om. 27$^b$-28$^a$. — $^b$) K4. 5 B2-4 सु- ( for the first च ). D1 S दिव्यमस्त्रमुदारधीः. — $^c$)

प्रादुश्चक्रे महारौद्रं क्षणे तस्मिन्महाबलः ॥ २७
ततः शतसहस्रेण सौभद्रं प्रपितामहः ।
अवाकिरदमेयात्मा शराणां नतपर्वणाम् ॥ २८
ततो दश महेष्वासाः पाण्डवानां महारथाः ।
रक्षार्थमभ्यधावन्त सौभद्रं त्वरिता रथैः ॥ २९
विराटः सह पुत्रेण धृष्टद्युम्नश्च पार्षतः ।
भीमश्च केकयाश्चैव सात्यकिश्च विशां पते ॥ ३०
जवेनापततां तेषां भीष्मः शांतनवो रणे ।
पाञ्चाल्यं त्रिभिरानर्छत्सात्यकिं निशितैः शरैः ॥ ३१
पूर्णायतविसृष्टेन क्षुरेण निशितेन च ।
ध्वजमेकेन चिच्छेद भीमसेनस्य पत्रिणा ॥ ३२
जाम्बूनदमयः केतुः केसरी नरसत्तम ।
पपात भीमसेनस्य भीष्मेण मथितो रथात् ॥ ३३
भीमसेनस्त्रिभिर्विद्ध्वा भीष्मं शांतनवं रणे ।
कृपमेकेन विव्याध कृतवर्माणमष्टभिः ॥ ३४
प्रगृहीताग्रहस्तेन वैराटिरपि दन्तिना ।
अभ्यद्रवत राजानं मद्राधिपतिमुत्तरः ॥ ३५
तस्य वारणराजस्य जवेनापततो रथी ।
शल्यो निवारयामास वेगमप्रतिमं रणे ॥ ३६
तस्य क्रुद्धः स नागेन्द्रो बृहतः साधुवाहिनः ।

---

Ś1 K3 D2.3.5 प्रादुष्करोन् ( for प्रादुश्चक्रे ). K3.4 B Da2 Dn D4.5.7.8 महारौद्रे; D1 S ( except G4 ) °रौद्रं; D2.6 °रौद्रान्. K0-2 प्रादुश्चकार रौद्राणि; K5 प्रादुष्करोत्क्षणे तस्मिन्. — d ) K0-2 B Dn D4.7.8 G1 M रणे ( for क्षणे ). M4 महारथः. K5 महारौद्रे महाबलः.

28 Da1 om. 28a ( cf. v. l. 27 ). — a ) Ś1 K0-3.5 B3 Dn D2-4.6-8 शरसहस्रेण; D1 शतसहस्राणि; M2.4.5 °सहस्राणां. — b ) D1 S शराणां नतपर्वणां ( = 28d ). — d ) Ś1 K D2.3.6.7 तदद्भुतमिवाभवत्; D1 सौभद्रं परवीरहा; S सौभद्रं प्रपितामहः ( = 28b ).

29 c ) K1.3 D1.2.6 T1 रक्षार्थमभिधावंतः; K5 रक्षमाणाभ्यधावंत; Da1 D3 रक्षार्थमभ्यधावंती ( D3 °तः ); Dn1 D5 °मभ्यधावंतं. — d ) G1-3 रणे ( for रथैः ).

30 b ) K0 पार्श्वतः. — c ) K0.2 Dn1 M1.3 केकयश्चैव; K1 कीकय°; K3.5 Da D1-3.5-8 M4 कैकया°; Dn2 D4 कैकय°. — d ) K1 Da1 G3 सात्विकिश्च. D1 [अ]पराजितः ( for विशां पते ).

31 a ) Dn D4 जवेन पततां तेषां; D1 S तेषां जवेनापततां ( by transp. ). — b ) D1 S भीष्मोपि ( D1 M3-5 °थ ) त्वरितो रणे. — c ) K1 पंचाल्यं; K5 पांचालस्; D1 G1.2 पांचालं. Ś1 Da1 D3 आनर्छे. K0 पांचल्यं तैत्तिरेणार्छत्; K1 पंचाल्यं तैत्तिरेणार्हत्. — d ) K1 G3 सात्विकिं. K4 च सितैः; B Dn D4.7.8 नवभिः; Da D1.5 S च त्रिभिः ( for निशितैः ). K5 D2.3.6 त्रिभिः ( for शरैः ).

32 a ) = 11a. K0-2 °यतविशिष्टेन; D3 °यतानस्°; G3 °यतौ विसृ°. — b ) D1 शरेण. K3 ह ( for च ). — d ) D1 भीमसेनोस्य पत्रिणा; M1.2 भीमस्य नतपर्वणा.

33 a ) K5 केतूः; D3 S श्रीमान् ( for केतुः ). — b ) K0 केसरीन्; a few MSS. केशरी; Cc. v केसरी ( as in text ). Ś1 न**त्तम; K0-2 Da D5 नृपसत्तम ( Da1 °मः ); K4 B D2.6.8 नरसत्तमः; D1.3 T2 G2 M1.2.4 स नरोत्तम; T1 G4 स नृपोत्तम; G1.3 [इ]व नरोत्तम; M3.5 स ध्वजोत्तम ( M3 °मः ); Cv नर° ( as in text ). — c ) Da1 °सेनेन. — d ) M1 महितो. Ś1 रणात्. K5 भीष्मेणोन्मथितो रथात्; Da1 भीमेन रथितो रथात्; D1 छिन्नं भीष्मेण वै रथं.

34 a ) K4 B D ( except D2.6 ) S ततो भीमस् ( for भीमसेनस् ). B2 त्रिभिर्भित्त्वा. — b ) T1 युधे ( for रणे ).

35 a ) D1 प्रगृहीतोग्र°; D3 निगृहीताग्र°; Cc. v as in text. — d ) K5 °मुत्तरं; B4 °मुत्तमं; Da2 D °रुत्तरः.

36 b ) K4 रथे च; Cc रथेन ( for जवेन ). D1 [आ]पतितो; M1.3 [उ]त्पतितो. K0 ( sup. lin. as in text ) बली ( for रथी ). B Da ( Da1 damaged ) Dn D4.5.7.8 रथे चा( B2 रथे च; B3 वेगेना°; Da2 D रथेना )पततो जवात्. — d ) Ś1 D3 °प्रतिमैः. Ś1 K0-2.5 D1-3.6 शरैः ( for रणे ).

37 a ) Ś1 बभ्रुः स; Da1 क्रुद्धस्य; D1 [अ]भवत्स; T G4 बभ्रून्स; G1.3 बभ्रन्स; G2 विभ्रन्स; M वाहान्स ( for क्रुद्धः स ). Cd cites बभ्रून्. M2 राजेंद्रो ( for नागेन्द्रो ). K0-2 समवष्टभ्य नागेंद्रम्. — b ) K0 उत्तरः

पदा युगमधिष्ठाय जघान चतुरो हयान् ॥ ३७
स हताश्वे रथे तिष्ठन्मद्राधिपतिरायसीम् ।
उत्तरान्तकरीं शक्तिं चिक्षेप भुजगोपमाम् ॥ ३८
तया भिन्नतनुत्राणः प्रविश्य विपुलं तमः ।
स पपात गजस्कन्धात्प्रमुक्ताङ्कुशतोमरः ॥ ३९
समादाय च शल्योऽसिमवप्लुत्य रथोत्तमात् ।
वारणेन्द्रस्य विक्रम्य चिच्छेदाथ महाकरम् ॥ ४०
भिन्नमर्मा शरव्रातैश्छिन्नहस्तः स वारणः ।
भीममार्तस्वरं कृत्वा पपात च ममार च ॥ ४१

एतदीदृशकं कृत्वा मद्रराजो महारथः ।
आरुरोह रथं तूर्णं भास्वरं कृतवर्मणः ॥ ४२
उत्तरं निहतं दृष्ट्वा वैराटिर्भ्रातरं शुभम् ।
कृतवर्मणा च सहितं दृष्ट्वा शल्यमवस्थितम् ।
शङ्खः क्रोधात्प्रजज्वाल हविषा हव्यवाडिव ॥ ४३
स विस्फार्य महच्चापं कार्तस्वरविभूषितम् ।
अभ्यधावज्जिघांसन्वै शल्यं मद्राधिपं बली ॥ ४४
महता रथवंशेन समन्तात्परिवारितः ।
सृजन्बाणमयं वर्षं प्रायाच्छल्यरथं प्रति ॥ ४५

C. 6. 2013
B. 6. 49. 23
K. 6. 49. 23

---

K1.2 अत्तरः ; K3 D2.6 M3.5 बृहंतः ; B1 बृंहत ; D1 संवृतः ; Cc बृहतः ( as in text ). Ś1 K0-2 B2 D6 T1 G4 °वाहनः ; D1 °वाहिभिः ; Cc °वाहिनः ( as in text ). — d ) K0-2 जघानास्य हयोत्तमान्.

38 D5 om. (? hapl.) $38^{a}$–$39^{b}$. — a ) D3 संहताश्वे ; G3 स हताश्वो. Da1 सगणश्वे रथे राजन्. — b ) K0 मद्राधिपतिम्. K1 आयसी ; D1 आहवे. — c ) K1 °करी शक्तिं ; K5 °करीं घोरां ; Da1 D3 °करिं शक्तिं ; D1 प्राणप्रगृहिणीं शक्तिं. — d ) K2 D1 चिच्छेद ( m तत्याज ) (for चिक्षेप ). K5 भुजगोत्तमं.

39 D5 om. $39^{ab}$ ( cf. v. l. 38 ). — a ) K1.5 T2 M4 तथा ; T1 G तदा ( for तया ). D1 तस्य भिन्नं तनुत्राणं. — c ) B3 पपात स ( by transp. ). Ś1 K0.1 गजस्कंदात् ; Da1 भुजस्कंधात्. — d ) K3 D2.3.6 प्रमुक्तप्राससतोमरः ; D3 प्रयुक्तांकुश°.

40 a ) B2 M2 स ( for च ). K4 शल्योपि. D1.3 असिमादाय शल्योपि. — b ) K3 D2.6 अवतीर्य ; B1 मवश्रुत्य ; T2 ह्यवप्लुत्य ; M2 अवा°. Ś1 K0-4 D2.6 महारथात्. — c ) K4 वारणे रणराजस्य ; D3 तस्य वारणराजस्य. — d ) Ś1 K0-2.5 चिच्छेदास्य ; K3 D2.6 T1 G1.2.4 M5 °दाशु. D3 महीकरं.

41 a ) K0.1 भिन्नपत्रा ( K0 °त्राः ) ; K2 °मर्मः ; K5 T G M1.3.5 °वर्मा ( G1.3 °र्प्मा ) ; D3 छिन्नमर्मा. Ś1 K D2-4.6 M1 शरशतैश्. — b ) Ś1 K3 D2.6 च (for स ). G1 रावणः ( by metathesis ). — c ) D3 तुतम् ( for भीमम् ). T2 °रवं ( for °स्वरं ). G3 भीमेनर्तस्वयं कृत्वा (sic). — T2 om. ( hapl. ) $41^{d}$–$42^{a}$. — After 41, Ś1 writes उत्तरवधः.

42 T2 om. $42^{a}$ ( cf. v. l. 41 ). — a ) K4 B1.4 Da ( Da1 damaged ) D5 एतदेतादृशं ; D1 तदेतदीदृशं ; D3 एतादृशं रणं. K0.2 दृष्ट्वा ( for कृत्वा ). — b ) B1.2 Dn2 D7.8 G1.2 M2 जनाधिपः ; B3 Dn1 D4 T1 G4 M1.3-5 नराधिपः ; B4 D3.5 G3 नराधिप ; Da1 damaged ; Da2 धनाधिपः ( for महारथः ). — c ) D1 अरुणोह ( sic ). — d ) K1 भासुरं.

43 a ) B1.3 Dn2 D1.4 S ( except T2 ) तु ; B2.4 D3.7 वै ; D3 च ( for नि- ). — b ) D2 T1 G2.4 M1.3.4 वैराटिं. B1-3 Da D5 ततः ; B4 Dn D4.7.8 G3 M5 तदा ; D1 प्रति ; D3 T1 G1.2.4 M1-4 तथा ( for शुभम् ). — After $43^{ab}$, Dn ins. a passage given in App. I ( No. 4 ). — c ) Hypermetric. D1 कृतवर्मणो रथगतं ; D3 °र्मणाथ सहितं ; D6 M1 °र्मा च ( D6 °र्माण- ) सहितं. — A passage given in App. I ( No. 4 ) is ins. in B3.4 Da D4.5 after $43^{cd}$ ; in Dn ( transferring lines 9–18 after 46 ), after $43^{ab}$ ; in M3-5 ( all om. lines 1–6, and 288–339 ), after 46. — e ) M1.2 स ( for प्र- ). — f ) T2 °षा हव्यवाहवत्.

44 b ) = $13^{b}$. K4 B D ( except D2.6 ) S शक्रचापोपमं बली. — c ) K0-4 D6 अभ्यद्रवज् ; M1.2 अभ्ययाच्च. K0 D1 जिघांसुर्वै ; B1.2 °संस्तु ; S जिघांसुस्तं ( T2 °संतं ). Ś1 अभ्याद्रवज्जिघांसार्थं. — d ) K0 शक्यं ( for शल्यं ). B1.2 Da D1.3.5 S युधि ( for बली ).

45 a ) D4 रथवेगेन ; M2 रणवंशेन ; Cc रथवं° ( as in text ). — b ) D3 परिरक्षितः ; M2 परितः सृजन् ( for परिवारितः ). — c ) B2 मुंचन् ( for सृजन् ).

46 a ) T1 G2.4 आपतंतं तु ( G2 स ) संप्रेक्ष्य. — b )

C. 6. 2013
B. 6. 49. 26
K. 6. 49. 28

तमापतन्तं संप्रेक्ष्य मत्तवारणविक्रमम् ।
तावकानां रथाः सप्त समन्तात्पर्यवारयन् ।
मद्रराजं परीप्सन्तो मृत्योर्दंष्ट्रान्तरं गतम् ॥ ४६
ततो भीष्मो महाबाहुर्विनद्य जलदो यथा ।
तालमात्रं धनुर्गृह्य शङ्खमभ्यद्रवद्रणे ॥ ४७
तमुद्यतमुदीक्ष्याथ महेष्वासं महाबलम् ।
संत्रस्ता पाण्डवी सेना वातवेगहतेव नौः ॥ ४८
तत्रार्जुनः संत्वरितः शङ्खस्यासीत्पुरःसरः ।
भीष्माद्रक्ष्योऽयमद्येति ततो युद्धमवर्तत ॥ ४९
हाहाकारो महानासीद्योधानां युधि युध्यताम् ।
तेजस्तेजसि संपृक्तमित्येवं विस्मयं ययुः ॥ ५०
अथ शल्यो गदापाणिरवतीर्य महारथात् ।
शङ्खस्य चतुरो वाहानहनद्भरतर्षभ ॥ ५१
स हताश्वाद्रथात्तूर्णं खड्गमादाय विद्रुतः ।
बीभत्सोः स्यन्दनं प्राप्य ततः शान्तिमविन्दत ॥ ५२
ततो भीष्मरथात्तूर्णमुत्पतन्ति पतत्रिणः ।
यैरन्तरिक्षं भूमिश्च सर्वतः समवस्तृतम् ॥ ५३
पाञ्चालानथ मत्स्यांश्च केकयांश्च प्रभद्रकान् ।

---

D8 शंखं रणविशारदं. — D8 om. $46^{cd}$. — d) K0–2 परिवारितं (for पर्यवारयन्). — After 46, M3–5 ins. a passage given in App. I (No. 4); while K3 ins., and D4 *repeats*, lines 9–18 of that passage also cf. v. l. 43).

47 D1 om. $47^{ab}$. — a) T2 भीमो (for भीष्मो). — b) K5 विनर्दन्; D6 विनदन्; G3 व्यनद्य. — c) G1 damaged. K5 तनुर्; Da1 धनु. T1 G4 बिभ्रन्; T2 G2.3 M1.2 बिभ्रत् (for गृह्य). — d) Ś1 अभ्याद्रवद्.

48 a) K3 समुद्यतम्; K4 B D (except D2.3) T1 G M5 तमुद्यंतम्. K0.2 समीक्ष्याथ; K1 महेक्ष्याथ (corrupt); K5 समुद्वीक्ष्य; B3 अवेक्ष्याथ; T G M1.2 उदीक्ष्यैनं. — b) K0–2 D3 M3–5 महारथं (for °बलम्). — Dn1 om. $48^{d}$–$50^{a}$. — d) K0 वातवेगवतेव; Da1 Dn2 D3.4.7.8 G3 M1.2 वातवेगाहतेव; T2 वातवेगवधेव. K0.3 Da1 D6 G4 नौ; T2 गौः.

49 Dn1 om. 49 (cf. v. l. 48). — a) D8 S (except M3.4) ततोर्जुनः. Ś1 K2 D6 M1 स; D8 च (for सं°). — b) M4 पुरःसरं. — c) K1 Da1 भीष्माद्रक्षो; B3 भीष्मः क्रुद्धो. K4 B D7 T2 अभ्येति; T1 G4 इत्येव; M3 अद्येव (for अद्येति). D8 भीष्मादिच्छां चिकीर्षुर्वै. — d) Ś1 K0–4 D1.2.6 M1.2 तयोर्; B4 Dn2 D4.7.8 तत्र (for ततो).

50 Dn1 om. $50^{a}$ (cf. v. l. 48). — a) = $59^{c}$. S °कारस्ततो (M1.2 °था) राजन्. — b) K3 तत्र (for युधि). K3 D2 M5 गर्जतां; M3 निर्जितां (for युध्यताम्). T G4 योधानां युध्यतां तदा. — c) D8 ततस्तेजांसि. B1.4 Da D5 T1 G4 M3–5 संयुक्तम्; T2 G2.3 M1.2 संसक्तम्. — d) Ś1 इत्येव (for इत्येवं). D3 T1 G2.4 M1–4 विस्मयात्; T2 विस्मयो; G1.3 व्यस्मयंन्. D1 S तदा (T2 [ऽ]भवत्) (for ययुः).

51 a) B4 यथा (for अथ). B1 महाबाहुर् (for गदापाणिर्). — c) G1.3 च ततो (for चतुरो). — d) B1.2.4 Da1 Dn D4.7.8 S अवधीद् (for अहनद्). D1 प्रेषयामास मृत्यवे.

52 a) K0–2 महताश्वाद्; K4.5 B1.2.4 Dn3 D1.2.4.6–8 T1 G2.4 स हताश्वो; T2 G1.3 M स हताश्वे. S रथे तिष्ठन् (for रथात्तूर्णं). — b) D6 विद्रुतं; M विश्रुतः (M4 °तं). B3 शल्यमालोक्य विश्रुतः. — c) B1.2.4 Da Dn D3–5.7.8 च रथं; B3 स रथं (for स्यन्दनं). Ś1 गत्वा; K0.1 प्राप; K2 प्रापुस. — d) D1.3.6 S पुनः (for ततः). K0–2 अवाप च (for शान्तिमविन्दत). — After 52, D1 reads 6. 46. $4^{cd}$, $153^{*}$, the ref. युधिष्ठिरः and $5^{a}$–$23^{b}$.

53 a) D8 भीम° (for भीष्म°). — b) Ś1 Dn3 D4.7.8 उत्पतंतः; Dn1 (by corr.) उत्पतंतं; D1 प्रापयंत; S प्रपतंति. — c) K3 द्यौर्; D1 तैर् (for यैर्). K4 M4 भूमिं च. — d) Ś1 समंतात् (for सर्वतः). B1.2.4 Da Dn D3–8 समवस्तृता (D6 °सृतां); B3 समवे * ता. D1 S सर्वतोभू(D1 °मासी)त्समावृतं. — After 53, Ś1 ins. (cf. $54^{a}$, $55^{b}$):

151* पाञ्चालानथ मत्स्यं च द्रुपदं सेनया वृतम् ।

54 a) K1.4.5 B1.3.4 Da1 D1.2.5 G3 M5 पंचालान्; T G4 पांचाल्यान् (for पाञ्चालान्). Ś1 मत्स्यां च; K1.2 मत्स्यांश्च. — b) K3 D2 कैकेयां°; B4 केवलां°; Da1 कैरलां°; Da2 Dn2 D4.5.8 केरलां°; D1.3.6 कैकयां°;

भीष्मः प्रहरतां श्रेष्ठः पातयामास मार्गणैः ॥ ५४
उत्सृज्य समरे तूर्णं पाण्डवं सव्यसाचिनम् ।
अभ्यद्रवत पाञ्चाल्यं द्रुपदं सेनया वृतम् ।
प्रियं संबन्धिनं राजञ्शरानवकिरन्बहून् ॥ ५५
अग्निनेव प्रदग्धानि वनानि शिशिरात्यये ।
शरदग्धान्यदृश्यन्त सैन्यानि द्रुपदस्य ह ।
अतिष्ठत रणे भीष्मो विधूम इव पावकः ॥ ५६
मध्यंदिने यथादित्यं तपन्तमिव तेजसा ।
न शेकुः पाण्डवेयस्य योधा भीष्मं निरीक्षितुम् ॥ ५७
वीक्षांचक्रुः समन्तात्ते पाण्डवा भयपीडिताः ।
त्रातारं नाध्यगच्छन्त गावः शीतार्दिता इव ॥ ५८
हतविप्रद्रुते सैन्ये निरुत्साहे विमर्दिते ।
हाहाकारो महानासीत्पाण्डुसैन्येषु भारत ॥ ५९
ततो भीष्मः शांतनवो नित्यं मण्डलकार्मुकः ।
मुमोच बाणान्दीप्ताग्रानहीनाशीविषानिव ॥ ६०
शरैरेकायनीकुर्वन्दिशः सर्वा यतव्रतः ।
जघान पाण्डवरथानादिश्यादिश्य भारत ॥ ६१
ततः सैन्येषु भग्नेषु मथितेषु च सर्वशः ।
प्राप्ते चास्तं दिनकरे न प्राज्ञायत किंचन ॥ ६२
भीष्मं च समुदीर्यन्तं दृष्ट्वा पार्था महाहवे ।
अवहारमकुर्वन्त सैन्यानां भरतर्षभ ॥ ६३

C. 6. 2032
B. 6. 49. 53
K. 6. 49. 53

इति श्रीमहाभारते भीष्मपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

M3–5 कोसलां°. — c) M4 श्रेष्ठं. — d) Ś1 पतया°; M1. 2 तापया°. Ś1 K D1–3. 6 पत्रिभिः ( for मार्गणैः ).

55 a) B Da Dn D1. 3–5. 7. 8 T2 M राजन्; T1 G वीरं ( for तूर्णं ). — c) Ś1 अभ्याद्रवत; K1 अभिद्रवत; K2 अभ्यद्रवति; S अभ्यवर्तंत. K1 पंचालं; K2 पांचाल्ये. — d) D1 द्रौपदं. K5 D6 M2 वृतः. — f) Ś1 शरानवाकिरन्; K3 D2. 6 स शरान्विकिरन्; Da Dn D4. 5. 7. 8 शरांश्च विकिरन्; M1. 2 शरानाविकिरन्.

56 D8 transp. 56ab and 56ef. — a) Ś1 K3 अग्निरेव; D6 °रिव. — d) K0–2 D6 S च; K5 D1. 8 हि ( for ह ). — e) K4 B3 अत्यतिष्ठद्; B1. 2. 4 अतितिष्ठद्; D1 व्यतिष्ठत; D2 S अतिष्ठच्च. — f) = 6. 7. 8d ( q. v. )

57 a) K3 D2. 6 यथादित्यस्. — b) K2 पतंतम् ( by metathesis ). K3 D2. 6 तपन्नमिततेजसा; D1 तपंतं रश्मिमालिनं. — d) Da Dn1 D5 समीक्षितुं.

58 a) K0–2 वेक्षां°; K5 D6 वीक्ष्यां°. K1. 2 समंतात्ते; D3 S समंतात्तं. — c) K4 B4 नाध्यपश्यंत; K5 G1–3 M1. 3–5 नाभ्यगच्छंत; B3 Dn2 D4. 7. 8 नाभ्यपश्यंत; Da Dn1 D5 नाभ्यपद्यंत; D6 नाधिगच्छंतो. — After 58, Dn2 D4 ins.:

152* सा तु यौधिष्ठिरी सेना गाङ्गेयशरपीडिता ।
सिंहेनेव विनिर्भिन्ना शुक्ला गौरिव गोपतेः ।

59 D1 om. 59. — a) K3. 5 Dn1 D2. 6. 8 हते विप्रद्रु°; T1 G अथ तस्मिन्द्रु°; T2 अथ तद्विद्रु°; M अथ विप्रद्रु°. — b) K1 विमर्दिनी ( for विमर्दिते ). — c) = 50a. — d) Dn2 D4. 8 °सैन्यस्य. K2 भारतः; D3 सैनिकाः; S ( except M3 ) मारिष.

60 a) D1 ततो शांतनवो भीष्मो. — b) Ś1 K3 Dn2 D2. 3. 6 M3. 5 नित्य- ( for नित्यं ). D1 मंडलीकृतकार्मुकः. — c) D1 तीक्ष्णाग्रान् ( for दीप्ता° ). — d) K3 D1. 2. 6 अही( D1 छिता )नाशीविषोपमान्.

61 a) D1 एकायनाः; D3 °यना-; T2 °यनं; M3. 5 यनीः; Ca. c. d एकायनी° ( as in text ). K5 शरीरे कायजान्कुर्वन्. — d) D3 उद्दिश्योद्दिश्य भारत.

62 a) K3 D2 सर्वेषु; M2 दुर्गेषु ( for भग्नेषु ). — b) B D ( except Dn1 D2. 3. 6 ) T G M1. 2 च भारत; M3. 5 विशां पते. — c) B1–3 चास्ते. — d) K0 प्राज्ञयत ( sic ); Dn2 D1–3. 6. 7 T G1. 4 M1–4 प्रज्ञायत.

63 a) Ś1 समुदीक्षंतं; D3 समुदीप्यंतं; T2 समुदीर्णं तं. — b) K1. 5 Da2 D5. 8 पार्थं. K5 महामृधे. — c) T1 G2–4 M1. 4 अपहारम् ( for अव° ). Cc. d cite अवहारः. K5 D6. 8 S ( except G3 M2 ) °वंस्ते ( for °र्वन्त ). — d) D1 भरतोत्तम; D3 भरतर्षभः.

# ४६

C. 6. 2033
B. 6. 50. 1
K. 6. 50. 1

संजय उवाच ।
कृतेऽवहारे सैन्यानां प्रथमे भरतर्षभ ।
भीष्मे च युधि संरब्धे हृष्टे दुर्योधने तथा ॥ १
धर्मराजस्ततस्तूर्णमभिगम्य जनार्दनम् ।
भ्रातृभिः सहितः सर्वैः सर्वैश्चैव जनेश्वरैः ॥ २
शुचा परमया युक्तश्चिन्तयानः पराजयम् ।
वार्ष्णेयमब्रवीद्राजन्दृष्ट्वा भीष्मस्य विक्रमम् ॥ ३
कृष्ण पश्य महेष्वासं भीष्मं भीमपराक्रमम् ।
शरैर्दहन्तं सैन्यं मे ग्रीष्मे कक्षमिवानलम् ॥ ४
कथमेनं महात्मानं शक्ष्यामः प्रतिवीक्षितुम् ।
लेलिह्यमानं सैन्यं मे हविष्मन्तमिवानलम् ॥ ५
एतं हि पुरुषव्याघ्रं धनुष्मन्तं महाबलम् ।

---

Colophon om. in T1 G4. — *Sub-parvan :* Omitting sub-parvan name, Ś1 K0. 1. 3. 5 D8 mention only प्रथमो ( K0 °म· ) युद्धदिवसः ; K4 D1 प्रथमदिवस ; B1 Da2 Dn1 D4. 5 प्रथमदिनयुद्ध ; B3 Da1 Dn2 प्रथमदिवसयुद्ध ; D2 प्रथमयुद्धदिवस ; D8 प्रथमेह्नि ; G1. 3 M1. 2 प्रथमाप( M1. 2 °व or °प )हार ; G2 प्रथमदिवस and प्रथमापहार ; M3–5 प्रथमाह्निक. K4 G1–3 M3. 5 cont. समास. — *Adhy. name :* K4 G1–3 M1. 2. 4 उत्तरवधः. — *Adhy. no.* ( figures, words or both ): K5 Da2 7 ; Dn2 M5 47 ; D1 48 ; D5 49 ; T2 G1–3 44 ; M1. 2 45 ( as in text ) ; M3. 4 46. — *Śloka no.* : Dn 49 ; D5 44.

## 46

1 K3 D2 om. the ref. After the ref., D3 ( *inf. lin. sec. m.* ) ins. प्रथमदिवसः. Da1 om. $1^{ab}$. — $^{a}$) T1 G1. 2. 4 M2. 4 कृतेपहारे ; T2 कृताप° ; G3 कृतोप°. Cd cites $1^{a}$ as in text. — $^{b}$) Ś1 K0–2 प्रथमं ; D8 प्रथमेह्नि ( hypermetric ). D1 भारतोत्तम ( for भरत° ). — $^{c}$) K0. 2 B3 D5 युद्ध- ( for युधि ). K3 D2. 6 T1 G संहृष्टे ; B1 दुर्धर्षे ( for संरब्धे ). — $^{d}$) K3. 4 Dn2 D1. 2. 6 तदा ; M1. 2 नृपे ; M3–5 सति ( for तथा ). T G1. 3. 4 राजन्दु( T2 °जा दु )र्योधनेपि च ; G2 राजदुर्योधनेन च.

2 $^{a}$) D6 धर्मराजा. T2 तथा तूर्णम्. — $^{b}$) K3 D2. 6 समभ्येत्य ( for अभिगम्य ). — $^{c}$) D3 M1. 3. 4 सहितैः. D5 तस्य ; T G शूरैः ( for सर्वैः ). — $^{d}$) B1 जनाधिपैः. K5 सर्वैश्च जवनेश्वरैः ( sic ) ; D1 S सर्वैश्च पृथिवीश्वरैः ( M1. 2 सचिवैश्च समावृतः ).

3 $^{a}$) K4 ह्रिया ; K5 श्रुत्वा ( for शुचा ). B Da Dn D4. 5. 7. 8 शोकेन महता युक्तश्; D1 S शोकसंतप्तहृदयश्. — $^{b}$) K1 चिंतयाना ; Cc °यानः ( as in text ). Ś1 K4 T2 M3–5 पराभवं ; K5 परायणं. — D1 om. ( hapl. ) $3^{cd}$. — $^{c}$) K4 B1. 4 Da2 Dn D4. 5. 7. 8 राजा ( for राजन् ). — $^{d}$) Ś1 भीष्मसु- ( for °स्य ).

4 $^{a}$) B2 M1 पश्य कृष्ण ( by transp. ). — $^{b}$) G1 भीमं ( for भीष्मं ). — D1 reads $4^{cd}$, 153*, the ref. युधिष्ठिरः and $5^{a}$–$23^{b}$, after 6. 45. 52. — $^{c}$) Da Dn D4. 5. 7. 8 दहति ( for दहन्तं ). D1 तद् ( for मे ). K5 शरैर्मे निहतं सैन्यं. — $^{d}$) K2 भीष्मे ; D1. 3 भीष्मं ( for ग्रीष्मे ). Ś1 कर्षम् ; K1. 2 कक्ष्यम् ; Ca. d कक्षम् ( as in text ). Cc cites कक्षे ( sic ). K4. 5 B3. 4 D3 Dn2 D1–5. 7. 8 M5 इवानलः. — After $4^{cd}$, D1 ins. :

153* युधिष्ठिरो महाराज दृष्ट्वा कृष्णमथाब्रवीत् ।

5 For sequence in D1, cf. v. l. 4. Before 5, D1 ins. युधिष्ठिरः. — $^{a}$) K0. 2 महात्मानः ; B1 D3 महेष्वासं ; M2 नरव्याघ्रं ( for महात्मानं ). — $^{b}$) Ś1 K0. 2 Da2 Dn1 शक्यामः ; Da1 D5 शक्याम. K3 प्रीतिवी° ; G2 पृथिवी° ( for प्रतिवी° ). K5 शिक्षामो युधि वीक्षितुं ; D1 शक्नोम्यपि च वीक्षितुं. — K1 om. $5^{c}$–$6^{d}$. — $^{c}$) D1 Cc लेलिहानं च ; D3 रेरिह्यमाणं ; Cd लेलिह्य° ( as in text ). — $^{d}$) D1 हविःसिक्तम् ; T2 हविष्यंदम् ; Cc °ष्मन्तम् ( as in text ). K4 °नलः.

6 For sequence in D1, cf. v. l. 4. K1 om. 6 ( cf. v. l. 5 ). — $^{a}$) K2. 3. 5 B3 Da2 D5. 6 S ( except M2. 4 ) एनं ; K4 Da1 Dn1 ( before corr. ) D1. 3 एवं ( for एतं ). D1 °व्याघ्र. — $^{b}$) S धनुर्व्यात्तमहामुखं ( M1 °महाननं ; M2 °मिवाननं ). — $^{c}$) D1 तु विहितं ( for विप्रद्रुतं ). — $^{d}$) K4 समरे ( for मदीयं ). D3 मर्मणाहतं ; D8 मार्गणाहतं.

दृष्ट्वा विप्रद्रुतं सैन्यं मदीयं मार्गणाहतम् ॥ ६
शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च संयुगे ।
वरुणः पाशभृच्चापि कुबेरो वा गदाधरः ॥ ७
न तु भीष्मो महातेजाः शक्यो जेतुं महाबलः ।
सोऽहमेवं गते मग्नो भीष्मागाधजलेऽप्लवः ॥ ८
आत्मनो बुद्धिदौर्बल्याद्भीष्ममासाद्य केशव ।
वनं यास्यामि गोविन्द श्रेयो मे तत्र जीवितुम् ॥ ९
न त्विमान्पृथिवीपालान्दातुं भीष्माय मृत्यवे ।
क्षपयिष्यति सेनां मे कृष्ण भीष्मो महास्त्रवित् ॥ १०
यथानलं प्रज्वलितं पतंगाः समभिद्रुताः ।
विनाशायैव गच्छन्ति तथा मे सैनिको जनः ॥ ११
क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी ।
भ्रातरश्चैव मे वीराः कर्शिताः शरपीडिताः ॥ १२
मत्कृते भ्रातृसौहार्दाद्राज्याद्भ्रष्टास्तथा सुखात् ।
जीवितं बहु मन्येऽहं जीवितं ह्यद्य दुर्लभम् ॥ १३
जीवितस्य हि शेषेण तपस्तप्स्यामि दुश्चरम् ।
न घातयिष्यामि रणे मित्राणीमानि केशव ॥ १४
रथान्मे बहुसाहस्रान्दिव्यैरस्त्रैर्महाबलः ।

C. 6. 2047
B. 6. 50. 15
K. 6. 50. 15

7 For sequence in $D_1$, cf. v. l. 4. — $^{a}$) $Ś_1$ शक्यं ( for शक्यो ). $D_1$ शिवः ( for यमः ). $K_1$ शक्यं; $D_{1.3}$ S संख्ये ( for क्रुद्धो ). — $^{b}$) $K_4$ दंडपाणिश्च. $D_1$ केशव ( for संयुगे ). — $^{c}$) $Ś_1$ $K_{0-2}$ पाशबद्धोपि; $K_3$ $B_{1-3}$ $D_{1-3}$ °भृद्वापि; $M_{1.2}$ °भृच्चैव. — $^{d}$) $K_5$ कुबेरो गदया धरः.

8 For sequence in $D_1$, cf. v. l. 4. — $^{a}$) $D_1$ च (for तु). $K_{1.3}$ $D_1$ $G_2$ महातेजा; $D_{4.7.8}$ °बाहुः. — $^{b}$) $Ś_1$ $K_{0-3.5}$ $D_{2.6}$ महारथः. — $^{c}$) $K_0$ एव गते; $K_1$ $T_1$ $G_{2.4}$ एवं गतो; $G_3$ एतं गते; $M_4$ एनं गते. $T_1$ $G_{1.2.4}$ $M_1$ भग्नो ( for मग्नो ). — $^{d}$) $Ś_1$ भीष्मागाधजलप्लवे; $K_{0-2}$ °गाधे जलेप्लवः; $K_3$ $M_1$ भीष्मोगाधजलेप्लवः; $K_4$ B $Dn_2$ $D_{4.6.8}$ °गाध( $B_1$ °धे )जलेप्लुतः; Da $Dn_1$ $D_{1.5.7}$ °गाधजलेप्लवे; $D_3$ भीष्मोगाधे जलेप्लवे; T G भीष्मेणाथ जयेप्सुना; $M_{3.4}$ भीष्मेगाधजलेप्लवः ( $M_3$ °प्सवः ). Ca. c. d cite अप्लवे.

9 For sequence in $D_1$, cf. v. l. 4. — $^{b}$) $D_3$ केशवं. — $^{c}$) $G_2$ च्युतिं; $M_5$ वयं ( for वनं ). B D (except $D_2$ ) S वार्ष्णेय ( for गोविन्द ). — $^{d}$) $K_4$ मे वा न; $K_5$ मे नाद्य; Da Dn $D_{4.5.8}$ वा मे न; $T_1$ मेन्यत्र; $G_{2.4}$ मन्येत्र ( for मे तत्र ). $K_4$ Da $Dn_2$ $D_{1.4.5.7.8}$ M जीवितं.

10 For sequence in $D_1$, cf. v. l. 4. — $^{a}$) $K_5$ बुद्धिमान्; $B_2$ $T_2$ न त्वेमान्; $D_{3.6}$ न त्वेतान् ( for न त्विमान् ). — $B_2$ om. ( ? hapl. ) $10^{c}$–$11^{d}$; $M_2$ om. $10^{cd}$. — $^{c}$) $K_{0.2}$ क्षिपयिष्यति; $K_5$ क्षपयिष्यामि; $D_3$ क्षपयिष्यंति. $Ś_1$ $K_{0.1}$ $D_6$ मे सेनां ( by transp. ); $K_4$ मे सैन्यं; Da $Dn_1$ $D_5$ सेना मे; T G सैन्यं मे.

11 For sequence in $D_1$, cf. v. l. 4. $B_2$ om. 11 (cf. v. l. 10 ). — $^{a}$) $K_2$ तथा ( for यथा ). — $^{c}$) $K_4$ $B_{1.3}$ $Dn_2$ $D_{2.3}$ विनाशायोप°; $D_1$ °शमेव ( for °शायैव ). — $^{d}$) $K_3$ $Da_2$ $Dn_1$ ( before corr. ) $D_5$ यथा ( for तथा ). $K_{0.2.3.5}$ $D_{2.3.6}$ $T_2$ सैनिका जनाः; $M_{3-5}$ सैनिका जवात्. $T_1$ $G_{2.4}$ इमे सैन्या निराकृताः; $G_{1.3}$ इमे सैन्यादिका जवात्; $M_{1.2}$ तथा भीष्मं महारथं.

12 For sequence in $D_1$, cf. v. l. 4. — $M_4$ reads $12^{a}$–$13^{b}$ after 18. — $^{a}$) $Ś_1$ नेतास्मि; $K_5$ नीतोस्म ( sic ); Da $Dn_1$ $D_5$ ग( $Da_2$ गं )तोस्मि; $Dn_1$ ( marg. ) गतोस्मि; $D_1$ नीतो हि; $D_3$ नीतास्मि. — $^{b}$) $D_3$ °क्रमैः; $T_2$ °क्रमः. — $^{c}$) $Ś_1$ भ्रातरैश्चैव. $K_3$ $D_2$ $M_{1.2}$ वीर; $D_1$ धीर; $D_6$ वीरं. T G पार्थ( $G_{1-3}$ पांड )वा भ्रातरश्चैव. — $^{d}$) $Ś_1$ $K_{0-2.4}$ B $D_3$ कर्षिताः. $D_1$ शोककर्षिताः; $M_{3.5}$ शरविक्षताः ( for °पीडिताः ).

13 For sequence in $D_1$ $M_4$, cf. v. l. 4, 12. — $^{a}$) B Da Dn $D_{4.5.7.8}$ भ्रातृहार्देन; $D_1$ S °भावेन; $D_3$ (*inf. lin. sec. m.*) °स्नेहेन. — $^{b}$) $K_1$ corrupt. $D_{1.3}$ $M_{1.4}$ राज्यभ्रष्टास्; $D_2$ $T_2$ राज्याद्भ्रष्टात्. $D_1$ तथाभवन्. — $^{c}$) $D_6$ $T_2$ $G_2$ जीवितुं. $Ś_1$ $K_{0-2}$ मन्यंते ( for मन्येऽहं ). — $^{d}$) $D_6$ जीवितुं. $Dn_2$ त्वद्य; $D_1$ ह्यत्र; $T_2$ मे तु; $G_2$ चेह ( for ह्यद्य ). $D_1$ दुर्बलं ( for दुर्लभम् ).

14 For sequence in $D_1$, cf. v. l. 4. — $^{a}$) $Ś_1$ $K_3$ $D_2$ जीवितस्याव°; $K_{0-2}$ °तस्यावि°; $K_4$ $B_3$ $D_3$ °तस्य च; $K_5$ °तस्यापि; $D_5$ °तं तु वि°; $T_2$ °तस्य वि° ( for जीवितस्य हि ). $D_1$ शोषेण ( for शेषेण ). — $^{b}$) $D_6$ तप्स्याम. $K_5$ दुष्करं ( for दुश्चरम् ). — $^{c}$) Da Dn $D_{4.5.7.8}$ घातयिष्ये च ( for °यिष्यामि ). — $^{d}$) $D_1$ सैन्यमुख्यानि केशव.

15 For sequence in $D_1$, cf. v. l. 4. — $^{a}$)

C. 6. 2047
B. 6. 50. 15
K. 6. 50. 15

घातयत्यनिशं भीष्मः प्रवराणां प्रहारिणाम् ॥ १५
किं नु कृत्वा कृतं मे स्याद्ब्रूहि माधव माचिरम् ।
मध्यस्थमिव पश्यामि समरे सव्यसाचिनम् ॥ १६
एको भीमः परं शक्त्या युध्यत्येष महाभुजः ।
केवलं बाहुवीर्येण क्षत्रधर्ममनुस्मरन् ॥ १७
गदया वीरघातिन्या यथोत्साहं महामनाः ।
करोत्यसुकरं कर्म गजाश्वरथपत्तिषु ॥ १८
नालमेष क्षयं कर्तुं परसैन्यस्य मारिष ।
आर्जवेनैव युद्धेन वीर वर्षशतैरपि ॥ १९
एकोऽस्त्रवित्सखा तेऽयं सोऽप्यस्मान्समुपेक्षते ।
निर्दह्यमानान्भीष्मेण द्रोणेन च महात्मना ॥ २०
दिव्यान्यस्त्राणि भीष्मस्य द्रोणस्य च महात्मनः ।
धक्ष्यन्ति क्षत्रियान्सर्वान्प्रयुक्तानि पुनः पुनः ॥ २१
कृष्ण भीष्मः सुसंरब्धः सहितः सर्वपार्थिवैः ।
क्षपयिष्यति नो नूनं यादृशोऽस्य पराक्रमः ॥ २२
स त्वं पश्य महेष्वासं योगीश्वर महारथम् ।
यो भीष्मं शमयेत्संख्ये दावाग्निं जलदो यथा ॥ २३
तव प्रसादाद्गोविन्द पाण्डवा निहतद्विषः ।

---

M4. 5 रथान्स. — b) Ś1 महाबलं; D1 समन्वितान्; T2 महाबलैः. — c) D1 S (except G1 M2) पात° (for घात°).

16 For sequence in D1, cf. v. l. 4. — a) K3. 5 D1. 7. 8 तु (for नु). D8 कृष्ण (for कृत्वा). K4 B D (except D1-3. 6) Ccp हितं; Cc अलं (for कृतं). — b) Da1 om. from माधव up to सम in $16^{d}$. G3 केशव (for माधव). D8 मेचिरं.

17 For sequence in D1, cf. v. l. 4. — a) M3. 5 भीष्मः (for भीमः). D1 सत्त्वाद्; Cc शक्त्या (as in text). — b) Ś1 युध्यतैष; B1. 3 Da1 युध्यत्येव; G1. 3 युध्येदेष. K0-2 महाबलः; D3 ममानुजः. — d) D1 क्षात्रं; T2 क्षुद्र- (for क्षत्र-).

18 For sequence in D1, cf. v. l. 4. — a) G3 शर° (for वीर°). — b) Ś1 D1 महाबलः. — c) K1. 2 करोति सुकरं; K3 D2 प्रकरोत्यासुरं. — d) B Da Dn D4. 5. 7. 8 T2 रथाश्वनर(T2 °गज)दंतिषु; D1 नागाश्वरथपत्तिषु; D3 रथाश्वगज°; M1. 2 रथाश्वनरदंतिनां; M3-5 रथेभनरवाजिषु. — After 18, M4 reads $12^{a}$–$13^{b}$.

19 For sequence in D1, cf. v. l. 4. — a) Ś1 अशमेय (sic); K0-2. 5 B1 D3 अलमेष; T1 G4 नालमेव; T2 G2. 3 M1. 3-5 नालमेवं. Cc cites नालम् (as in text). — b) Ś1 K0-3. 5 D2. 6 परसैन्येषु; D1 मम सैन्यस्य. K1 M5 मारिषः; D1 माधवः. — c) M2 °वेनापि (for °वेनैव). — d) K0. 1. 3 D1-3. 6 वीरो (for वीर). Ś1 °शतेन यः; K0-2 °शतेन वा. K5 वीरवर्यं शमेन वा.

20 For sequence in D1, cf. v. l. 4. — a) M5 एका° (for एको°). Ś1 सकांतेयं; K3 D2. 6 सखायं ते; D1 सव्यसाची; S सहायोयं (for सखा तेऽयं). Co. d cite सखा (as in text). K5 एकोवास्त्रविशेषाते (s… — b) D1 स ह्यस्मान् (for सोऽप्यस्मान्). — c) … M4 निर्दह्यमाना; K5 निर्हत्यमानान्; G1. 3 दंदह्यमाना…; G2 निर्दह्यमानो. Ś1 द्रोणेन (for भीष्मेण). — K1 … (hapl.) $20^{d}$–$21^{a}$. — d) Ś1 भीष्मेण (for द्रोणेन).

21 For sequence in D1, cf. v. l. 4. K1 om. … (cf. v. l. 20). — a) K3. 5 D2. 6 दिव्याण्य°. — … K0-2 धक्ष्यंते; K3 B3 Da2 Dn1 धक्षंति. Ś1 K1 क्षत्रि… सर्वें (K1 °र्वा); D1 °यान्योधान्; T G °यानद्य. — … Da Dn1 D5 प्रमुक्तानि; D1 नियुक्तांश्च; T2 प्रवृत्तानि…

22 For sequence in D1, cf. v. l. 4. — a) T… भीमः (for भीष्मः). K5 Da1 D1 तु (for सु-). — b) K5 सहितान्; M3. 5 संमितः (for सहितः). K… सहितः पार्थिवर्षभैः. — c) K1 T2 क्षपयिष्यंति; B3 क्षपि… ष्यति स; D3 क्षापयिष्यति. K3 वै; D8 T2 ते (for नो). — d) D2 S (except M1. 3) तादृशो.

23 For sequence of $23^{ab}$ in D1, cf. v. l. 4. — … K0. 1 तं त्वं; G1 सत्यं. K1 परेश्वासं; B D3 D… D4. 5. 7. 8 महाभाग (for महेष्वासं). — b) K0-2. 4 … Da Dn1 D5. 8 T G1. 2. 4 योगेश्वर. D1 रथोत्तमं; D… महारथ; M1. 2 °भुज. — Before $23^{cd}$, D1 ins. संजय… — c) B Da Dn D3-5. 7. 8 T G M1. 2 भीष्मं य… (by transp.); D1 योस्मान्प्र-; M3-5 भीष्मोयं (for यो भीष्मं). Some S MSS. संघे and संखे. — d) G… दैवाग्निं; M1-3 दवाग्निं; M4 देवाग्निं. K5 जलदा यथा; D8 जलदोपमः.

24 a) B4 भवत्- (for तव). — b) M4 निहत… त्विषः. — c) K1 सुराज्यम्; K3 (marg. sec. m. as in text) अराज्यम्; D8 साम्राज्यम्; G1. 3 स्वाराज्यम्.

स्वराज्यमनुसंप्राप्ता मोदिष्यन्ति सबान्धवाः ॥ २४

एवमुक्त्वा ततः पार्थो ध्यायन्नास्ते महामनाः ।
चिरमन्तर्मना भूत्वा शोकोपहतचेतनः ॥ २५

शोकार्तं पाण्डवं ज्ञात्वा दुःखेन हतचेतसम् ।
अब्रवीत्तत्र गोविन्दो हर्षयन्सर्वपाण्डवान् ॥ २६

मा शुचो भरतश्रेष्ठ न त्वं शोचितुमर्हसि ।
यस्य ते भ्रातरः शूराः सर्वलोकस्य धन्विनः ॥ २७

अहं च प्रियकृद्राजन्सात्यकिश्च महारथः ।
विराटद्रुपदौ वृद्धौ धृष्टद्युम्नश्च पार्षतः ॥ २८

तथैव सबलाः सर्वे राजानो राजसत्तम ।
त्वत्प्रसादं प्रतीक्षन्ते त्वद्भक्ताश्च विशां पते ॥ २९

एष ते पार्षतो नित्यं हितकामः प्रिये रतः ।
सेनापत्यमनुप्राप्तो धृष्टद्युम्नो महाबलः ।
शिखण्डी च महाबाहो भीष्मस्य निधनं किल ॥ ३०

एतच्छ्रुत्वा ततो राजा धृष्टद्युम्नं महारथम् ।
अब्रवीत्समितौ तस्यां वासुदेवस्य शृण्वतः ॥ ३१

धृष्टद्युम्न निबोधेदं यत्त्वा वक्ष्यामि मारिष ।
नातिक्रम्यं भवेत्तच्च वचनं मम भाषितम् ॥ ३२

C. 6. 2065
B. 6. 50. 32
K. 6. 50. 32

---

स्नु मे प्राप्ता; D1 अनुसंप्राप्य. —$^{d}$) K4 B Da Dn D4. 5. 7. 8 T1 G4 मोदिष्यंते. Ś1 स्म (for स-).

25 Before 25, T2 G1–3 ins. संजयः. —$^{a}$) D1 धर्मराजो; D3 S च (G3 तु) कृष्णं स (for ततः पार्थो). —$^{b}$) D3 S दध्यौ राजा (D3 G1. 3 M4 राजन्) (for ध्यायन्नास्ते). D3 महामतिः. —$^{d}$) D6 शक्तोपहत°.

26 $^{a}$) B3 D3 S तमथो; D1 तु तथा (for पाण्डवं). K0–2 B1. 2. 4 Da Dn D4. 5. 7. 8 दृष्ट्वा; M2 राज्ञा (for ज्ञात्वा). —$^{b}$) Ś1 °चेतनं. K5 D1. 3 S दुःखोपहतचेतनं (K5 D1. 3 M °सं); B Da Dn D4. 5. 7. 8 दुःखेनावृतचेतसं. — K1 om. 26$^{c}$–27$^{d}$. —$^{d}$) D1 S इव (for सर्व-).

27 K1 om. 27 (cf. v. l. 26). Before 27, G1. 3 ins. श्रीकृष्णः. —$^{a}$) M4. 5 मा शोच. Ś1 पांडव° (for भरत°). —$^{b}$) = 6. 24. 27$^{d}$, 30$^{d}$. D1 नैतत्त्वय्युपपद्यते (= 6. 24. 3$^{b}$). —$^{c}$) K5 यत्र ते; D3 यस्येते. Ś1 K2 भ्रातराः. —$^{d}$) K4 D3 सर्वलोकेषु; G2 सर्वे लोकस्य. D7 विश्रुताः (for धन्विनः). B Da Dn D4. 5. 8 सर्वे ते लोकविश्रुताः (B1 Da D5 °धन्विनः).

28 $^{a}$) D1 अयं वै (for अहं च). —$^{b}$) K4 M1 सात्यकिं च. K1 पराजितः; D3 T G M3. 4 महायशाः; M1. 2. 5 महाबलः. —$^{c}$) B1. 2. 4 Da Dn D4. 5. 7. 8 चैव; B3 D1. 3 M चेमौ; T G चोभौ (for वृद्धौ). — G3 om. (hapl.) 28$^{d}$–30$^{c}$. —$^{d}$) K0 पार्श्वतः (for पार्षतः).

29 G3 om. 29 (cf. v. l. 28). —$^{a}$) D1 प्रबलाश्. B3 D1. 3 S चेमे (for सर्वे). —$^{b}$) K3. 5 D2. 6. 8 °सत्तमाः; Da1 M2 °सत्तमः. —$^{c}$) G1 त्वत्प्रसादात्. D3 M2 प्रतीक्ष्यंते. Ś1 K0–2 त्वत्प्रसादप्रतीक्षा वै; K3. 5 D2 त्वत्प्रसादप्रतीक्ष्या (K5 D2 °क्षा) श्च. —$^{d}$) T2 मद्भ° (for त्वद्भ°). B Da Dn2 D4. 6–8 विशेषतः (for विशां पते).

30 G3 om. 30$^{abc}$ (cf. v. l. 28). —$^{a}$) B D (except D1–3) S (G3 om.) अयं (for एष). M4 च (for ते). K0 Dn1 (marg.) पार्श्वतो. —$^{c}$) K4 B Da Dn1 (before corr.) D5. 8 सैना° (for सेना°). —$^{d}$) K0–2. 5 B Dn2 D4. 7. 8 महारथः. — After 30$^{cd}$, K2 *repeats* 28$^{ab}$. —$^{e}$) D1 महाबाहुर्. —$^{f}$) T2 M4. 5 निधने; Ca निधनं (as in text). Ś1 K0–2. 5 भीष्मस्यांतकरः किल; K3 D2. 6 भीष्मः शांतिकरः किल. — After 30, M3–5 ins.:

154* स त्वं पुरुषशार्दूल शार्दूलसमविक्रम ।
सेनापत्येन राजेन्द्र धृष्टद्युम्नं नियोजय ।

[ (L. 2) Cf. 30$^{cd}$. M3. 5 धृष्टद्युम्नो महाबलः. ]

31 Before 31, T2 ins. संजयः. —$^{a}$) D1 तच्छ्रुत्वा तु (for एतच्छ्रुत्वा). Ś1 K0–3 Dn2 D2. 4 महाराजो; K5 वचो राजा; D3 T1 G ततो राजन्; T2 महाराज (for ततो राजा). —$^{b}$) D3 महाबलं. —$^{c}$) D8 समितौ तत्स्थं; T1 G स हि धर्मात्मा; T2 सहसा वाक्यं; M1–3. 5 च महातेजा; M4 संनिधौ तस्य (for समितौ तस्यां). Cc cites समितौ (as in text). —$^{d}$) K2 वासुदेवेन संमितः (cf. 33$^{b}$).

32 Before 32, D1 T2 ins. युधिष्ठिरः. —$^{a}$) Ś1 निबोधेयं. —$^{b}$) K2–4 B D (except Da1) T G2–4 यत्त्वां. Ś1 D8 भारत; K0 पार्श्वत; K1. 2 D1 पार्षत;

C. 6. 2065
B. 6. 50. 33
K. 6. 50. 33

भवान्सेनापतिर्मह्यं वासुदेवेन संमतः ।
कार्त्तिकेयो यथा नित्यं देवानामभवत्पुरा ।
तथा त्वमपि पाण्डूनां सेनानीः पुरुषर्षभ ॥ ३३
स त्वं पुरुषशार्दूल विक्रम्य जहि कौरवान् ।
अहं च त्वानुयास्यामि भीमः कृष्णश्च मारिष ॥ ३४
माद्रीपुत्रौ च सहितौ द्रौपदेयाश्च दंशिताः ।
ये चान्ये पृथिवीपालाः प्रधानाः पुरुषर्षभ ॥ ३५
तत उद्धर्षयन्सर्वान्धृष्टद्युम्नोऽभ्यभाषत ।
अहं द्रोणान्तकः पार्थ विहितः शंभुना पुरा ॥ ३६
रणे भीष्मं तथा द्रोणं कृपं शल्यं जयद्रथम् ।
सर्वानद्य रणे दृप्तान्प्रतियोत्स्यामि पार्थिव ॥ ३७
अथोत्क्रुष्टं महेष्वासैः पाण्डवैर्युद्धदुर्मदैः ।
समुद्यते पार्थिवेन्द्रे पार्षते शत्रुसूदने ॥ ३८
तमब्रवीत्ततः पार्थः पार्षतं पृतनापतिम् ।
व्यूहः क्रौञ्चारुणो नाम सर्वशत्रुनिबर्हणः ॥ ३९
यं बृहस्पतिरिन्द्राय तदा देवासुरेऽब्रवीत् ।

---

S दुर्धर (for मारिष). K5 यत्प्रवक्ष्यामि पार्थिव. — c) K0 नाभिक्रुध्यं; K1 नाभिक्रंदं; Da1 M2 नातिक्रम्य. K1. 2 भवत्तच. — d) Ś1 मम भाषितुं; K0–2 समभाषितं; D1 प्रार्थितं मम. Ca. c. d cite भाषितम् (as in text).

33 a) D1 भव (for भवान्). S मे स्याद्; Ca. c मह्यं (as in text). — b) K5 D1 वासुदेवस्य; G3 °देवेषु-. K0. 2–4 B1 Da Dn D2. 5 G1–3 M1. 3. 4 संमितः; B2 शंसितः; T2 धार्मिक. — c) D1 तात; S पूर्वं (for नित्यं). — e) D6 तत्र (for तथा). K4 पार्थानां (for पाण्डूनां). — f) K1 सेनाने; K2. 3 Da1 Dn1 D2. 3. 8 G2 सेनानी. K0–2 भरतर्षभ; B4 Dn2 D4. 7. 8 T G M3 (*inf. lin.* as in text). 4. 5 भव पार्षत; D1 पुरुषोत्तम; M2 °षर्षभः.

34 a) T1 G1. 2. 4 °शार्दूलान्. — b) Ś1 K0–2 विक्रमी जहि; K3 D2. 6 युधि वि(D2 चा)क्रम (for विक्रम्य जहि). B3 शात्र° (for कौर°). — c) B D (except D2. 6) T G M4 ते (for त्वा). K3 D2. 6 °योत्स्यामि (for °यास्यामि). — d) K3 D2. 6 भीष्मं (for भीमः). D1 पार्षत (for मारिष). S भीम(G2 M1–3. 5 °मः)कृष्णौ च मारिष. Cc cites कृष्णः (as in text).

35 b) K0–2 दंसिताः; D8 दर्शिताः; T G संहिताः; M1. 4 संहताः; M2. 3. 5 संगताः (for दंशिताः). — c) T1 G अन्ये च (for ये चान्ये). — d) T2 प्रथिताः (for प्रधानाः). D1 पुरुषोत्तम. — After 35, M3–5 ins.:

155* एतावदुक्त्वा नृपतिः सहदेवमभाषत ।
अभिषेकस्य संभारान्क्षिप्रमानय वै जवात् ।
प्रादुरासीत्ततो धौम्यः संभारान्गृह्य भारत ।
सहदेवेन सहितः पाण्डवाय न्यवेदयत् ।
ततस्तं पुरुषव्याघ्रं द्रुपदस्यात्मजं युधि ।
भद्रपीठे सुखं न्यस्य अभिषेचयदच्युतः ।
अशोभताभिषिक्तो हि द्रुपदस्यात्मजो बली ।
यथा देवासुरे युद्धे कार्त्तिकेयो ह्यशोभत ।

36 a) K0–2 ततस्तूद्धर्ष°; K5 तव उद्धर्ष°; [illegible] ततस्तान्हर्ष°. Cc cites उद्धर्षयन् (as in text). — [illegible] D6 °द्युम्नोत्यभाषत. — Before 36cd, D7 ([illegible] m.) ins. धृष्टद्युम्न उवाच. — cd) K5 प्राणांतकः; [illegible] द्रोणान्तकः (as in text). T1 G4 पार्थो. D1 द्रोणांतकं [illegible] विहितः शंभुना पुरुषोत्तम.

37 a) K3 D2. 6 अहं; S कर्णं; Cc रणे (as in text). D1. 3 कृपं (for तथा). — b) D3 S [illegible] (for कृपं). D1 शल्यं च सजयद्रथं. — c) T1 G [illegible] (*sup. lin.*). 4 एतानद्य; G1–3 सर्वानपि. K3 D1 धृष्टान्; B3. 4 Dn2 D4. 7 (m as in text). 3 [illegible] (for दृप्तान्). K4 सर्वान्रणेभि*दृप्तानैव (sic); D[illegible] (Da1 damaged) Dn1 D5 दृष्ट्वा सर्वानद्य रणे. — d) K[illegible] Ś1 °योक्ष्यामि. K0. 1 (before corr.) पार्थिवान्; B3 भारत; D1. 7 पांडवान्.

38 a) Ś1 K0–3 D2. 6 महावीर्यैः (for महेष्वासैः). — For 38ab, S subst.:

156* तच्छ्रुत्वा जहृषुः पार्थाः पार्थिवाश्च महारथाः ।

— c) G1 M2 समुत्थिते; G2 °द्योते. — d) T1 पार्थिवे. B3. 4 Da Dn D4. 5. 7. 8 शत्रुतापने.

39 a) Ś1 K0–3. 5 D2. 6 अब्रवीच्च; D1 अब्रवीत्स (for तमब्रवीत्). B1. 3. 4 Da Dn D3–5. 7. 8 S पुनः; D1 तदा (for ततः). — b) Ś1 पर्षतं. — c) K3 D[illegible] T2 क्रौंचारणो; D1 T1 G M क्रौंचो रणे. — d) [illegible] °निसूदनः; Da Dn D1. 4. 5. 7. 8 °निपूदनः.

तं यथावत्प्रतिव्यूह परानीकविनाशनम् ।
अदृष्टपूर्वं राजानः पश्यन्तु कुरुभिः सह ॥ ४०
तथोक्तः स नृदेवेन विष्णुर्वज्रभृता इव ।
प्रभाते सर्वसैन्यानामग्रे चक्रे धनंजयम् ॥ ४१
आदित्यपथगः केतुस्तस्याद्भुतमनोरमः ।
शासनात्पुरुहूतस्य निर्मितो विश्वकर्मणा ॥ ४२
इन्द्रायुधसवर्णाभिः पताकाभिरलंकृतः ।
आकाशग इवाकाशे गन्धर्वनगरोपमः ।
नृत्यमान इवाभाति रथचर्यासु मारिष ॥ ४३
तेन रत्नवता पार्थः स च गाण्डीवधन्वना ।
बभूव परमोपेतः स्वयंभूरिव भानुना ॥ ४४
शिरोऽभूद्द्रुपदो राजा महत्या सेनया वृतः ।
कुन्तिभोजश्च चैद्यश्च चक्षुष्यास्तां जनेश्वर ॥ ४५
दाशार्णकाः प्रयागाश्च दाशेरकगणैः सह ।
अनूपगाः किराताश्च ग्रीवायां भरतर्षभ ॥ ४६
पटच्चरैश्च हुण्डैश्च राजन्पौरवकैस्तथा ।

C. 6. 2081
B. 6. 50. 43
K. 6. 50. 43

40 a) D1 यो; M4 यद् (for यं). — b) Ś1 M2 दैवासुरे. — c) K3 तथा तत्; D5 तथावत् (for यथावत्). K B D1-3. 6 T2 G1-3 M2-4 प्रतिव्यूहं; Da1 प्रतिव्यूह्य; T1 G4 °व्यूह्यं. — d) T G परा(T2 तदा)-नीकविमर्दनं; M1. 2 °कविदारणं. — f) M2 पश्यंति.

41 a) B Da1 Dn1 यथोक्तः. K4 B1. 2. 4 Da2 Dn D4-8 Cc स ह देवेन; T G M3(*sup. lin.*). 4. 5 स(T2 तु)नृपस्तेन; M1-3 पार्षतस्तेन (for स नृदेवेन). Ś1 तथोक्ताः सानृवीरेण (sic); K5 यथोक्तं नृपदेवेन. — b) M1 °भृतां. K3-5 D2. 6 S यथा (for इव). K0-2 जिष्णुर्वज्रभृतेव ह; Da1 विष्णुर्यज्ञभृतां वर (also °तामिव); Cc as in text. — d) K3 चक्रुर्; G1 कृत्वा (for चक्रे).

42 a) K1. 3 °पथगा; T2 °पतगः; Cc °पथगः (as in text). Cd cites आदित्यपथं. — b) B2 Da Dn1 D5. 7. 8 Cc तत्र (for तस्य). Dn2 D4 तत्राद्भुतमनोहरः; T1 G2. 4 तस्याद्भुतकरोत्तमः; G1. 3 °तमनौपमः. — d) K5 D8 निर्मिता (K5 °तां); M1. 2. 5 विहितो.

43 a) Dn2 °वर्णाभः. — b) K5 T2 M4 अलंकृतं. — e) G1-3 M चैव; Ca. d इव (as in text). T1 G4 राजन्नाकाशमध्ये तु; T2 आकाशगश्चकाशेसौ. — f) Da1 M2 मारिषः; D1 (m as in text) भारत (for मारिष).

44 a) Da1 D6 रत्नवती; Cv रत्नवता (as in text). K3 Da1 पार्थं; Cv पार्थः (as in text). D8 तेन रत्न च पार्थार्थः (corrupt). — b) D1 तेन; T1 G4 स हि (for स च). K5 गांडीवधन्वनः; D2. 6 गांजीवधन्वना. — c) K4 परमः प्रीतः; Ca. c. d. v परमो° (as in text). — d) B Da Dn1 D3. 5 सुमेरुरिव; T2 G3 स्वयंभुरिव. K0 D8 M2 (*inf. lin.* as in text). 5 वायुना (for भानुना).

45 a) K1-3 Da Dn D5. 8 शिरोभू; T1 G2. 4 विशिखो; T2 व्यूहस्य; G1. 3 विशिखाद्; M1-3. 5 शिखा तु; M3 (*inf. lin.*). 4 शिरस्तु (for शिरोऽभूद्). G1 राजन्. — b) B1. 2 D1 सह (for वृतः). — c) K5 D6 T2 कुंती°. K0-3. 5 D2. 6 T2 G1. 3 M शैब्यश्च (for चैद्यश्च). — d) Ś1 चक्षूंष्यास्तां; K0-2 चक्षुष्यांस्तां (K0 °स्तान्); K4 चक्षुर्म्यां तौ; B Da Dn D4. 5. 7. 8 M3-5 चक्षु(B3 चंचु)रास्तां; D1 चक्षुर्जातौ; T G M1. 2 चक्षुरासीज्. K0-3 D2. 6 जनेश्वरौ; B Da Dn D1. 4. 5. 7. 8 नरेश्वर; T1 G4 जनेश्वरः; G1. 3 जनाधिप.

46 a) Ś1 दशार्णशाः; K0 दशार्णदाः; K1 दाशर्णचा; K2 दाशार्णशः; B2 Da1 D1 M1. 3. 4 दशार्णकाः (D1 °कः); D2. 6 दा(D6 द)शार्णाश्च; T G M2. 5 द(T2 G3 M5 दा)शार्णगाः. Ś1 पुरोगाश्च; K0. 1 D1 प्रयागश्च; K4 प्रयोगाश्च; Dn2 प्रभद्राश्च. — b) K3. 4 B2 D (except D3) दासेरकग(D8 °र)णैः सह; T G4 M क-(M1. 3-5 द)शेरुकगणैः सह; G1 काशिकाशूरकैः सह; G2 देशेरुक्महणैः सह; G3 काशिकौरूशकैः सह. — c) K1. 2. 4. 5 B Da Dn D3-5. 7. 8 अनूपकाः; D1 अंध्राः सकाः; M1. 3 (*inf. lin.*) आरूपगाः; M2-4 आनूपगाः. — K1 om. (hapl.) 46d–48a. — d) D1 भरतोत्तम.

47 K1 om. 47 (cf. v.l. 46). — a) Ś1 D3 °चरैस्तु; Cv °चरैश्च (as in text). K4 Da Dn1 D5 T1 G2. 4 M1. 3 (*inf. lin.*). 4 हूणैश्च; B Dn2 D1. 4. 7. 8 Cv पौंड्रै(D1 °ड्रै)श्च; G1. 3 M2 भ्रूणैश्च; M3. 5 भोजैश्च (for हुण्डैश्च). T2 पटच्चरैर्भूपणैश्च. — b) B1. 2. 4 D (except D1-3. 6) राजा कौर°; T1 G4 M1 राजन्यैरवकै(M1 °रै)स्; T2 M2-5 राजन्यैरपरैस् (M2 °र्); G2. 3 राजन्रौरवकैः. K0. 2 D1 G1. 3 सह; M2 अपि (for तथा). — c) K0 विषादैः; Da D5 निषादः. Ś1 K0. 2-5 D1. 2. 6 सहित(K0. 5 °तै-; D2 °ता)श्चैव; B1. 2 °ताश्चापि; D3 °तैश्चापि. — d) D1 पृष्ठतश्च युधि°.

C. 6. 2081
B. 6. 50. 49
K. 6. 50. 49

निषादैः सहितश्चापि पृष्ठमासीद्युधिष्ठिरः ॥ ४७
पक्षौ तु भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ।
द्रौपदेयाभिमन्युश्च सात्यकिश्च महारथः ॥ ४८
पिशाचा दरदाश्चैव पुण्ड्राः कुण्डीविषैः सह ।
मडका लडकाश्चैव तङ्गणाः परतङ्गणाः ॥ ४९
बाह्लिकास्तित्तिराश्चैव चोलाः पाण्ड्याश्च भारत ।
एते जनपदा राजन्दक्षिणं पक्षमाश्रिताः ॥ ५०
अग्निवेश्या जगत्तुण्डा पलदाशाश्च भारत ।
शबरास्तुम्बुपाश्चैव वत्साश्च सह नाकुलैः ।
नकुलः सहदेवश्च वामं पार्श्वं समाश्रिताः ॥ ५१
रथानामयुतं पक्षौ शिरश्च नियुतं तथा ।
पृष्ठमर्बुदमेवासीत्सहस्राणि च विंशतिः ।
ग्रीवायां नियुतं चापि सहस्राणि च सप्ततिः ॥ ५२
पक्षकोटिप्रपक्षेषु पक्षान्तेषु च वारणाः ।

---

48 K1 om. $48^{a}$ (cf. v. l. 46). — a) Ś1 K5 M1 च (for तु). — b) K0 पार्श्वतः. — c) = 6. 48. $29^{c}$. S द्रौपदेयाश्च कार्ष्णिश्च; Cv as in text. — d) K1 सात्यकिं च पराजितः.

49 a) K4 B2 Da Dn1 D5 पाश्चात्या; T1 पिशाच-; T2 पिशंगा (for पिशाचा). K0. 2 B3. 4 D4. 7 G3 M5 दारदाश्चैव; B1. 2 Da Dn1 D5 दाक्षिणात्याश्च; D1 दरदाः शैब्याः. — b) K0. 2 D6 पौंड्राः; K4 B1 Da2 D5 पुंड्रैः; B2 Dn2 D4 पौंड्रैः; B4 पुत्रैः; Da1 पुंटैः; Dn1 पुंटैः; D1 पौंढ्राः; D2 पुंट्राः; D3 मुंडाः; D8 पौंड्रः. K3 कुंत्तीविषैः; K4 B1. 2. 4 Da Dn D4. 5. 7. 8 कुंडीवृषैः; D1 कुंतिपयैः; D3 कुंडीविधैः; D6 कौंडिविषैः; T G4 M3. 4 क्रुंडि°; G3 कुंडवृषैः; M1. 2 कुंडविषैः. T2 (also as in text) तथा (for सह). K1 पांडक्रडीवषैः सह (sic). — c) Ś1 मेरुका; K1 मंडका; K3 D2. 6 म(D6 मा)गधा; K4 B1. 3 Da Dn1 D5 G3 मारुता; B2. 4 Dn2 D4. 7. 8 यवना; T G1. 2. 4 निकुंभो; M मरुत्तो (M3. 5 °त्तो) (for मडका). Ś1 लरुकाश्चैव; K1 लदका°; K3 D2. 6 वेणुका°; K4 B Da Dn D4. 5. 7. 8 S धेनुका(T2 °गा-; G1. 2 °क)श्चैव (for लडका°). K5 मरुकधेनुकश्चैव; D1 मरुंडवेणुकाश्चैव; D3 मारुका मगवेणुश्च. — D2 om. (hapl.) $49^{d}$–$50^{a}$. — d) = 6. 10. $63^{b}$. B3 टंकणाः परटंकणाः; S तं(M4 कं)कणाः परतंकणाः.

50 D2 om. $50^{a}$ (cf. v. l. 49). — a) Ś1 वाल्मीकास्; K0 वाही°; K1 वाहे°; K2. 3 Dn2 D3. 6–8 T2 G2 बाह्ली°; M1 वाहि°. D8 तिमिरा°; G1 तित्तरा°. D1 मरुत्ता वेणुकाश्चैव. — b) Ś1 K0 पांड्याश्चोड्राश्च; K1 पाद्यचोडाश्च; K2. 3 D2. 6 पांड्याश्चोडा (D2 °श्चौला)श्च; K5 पांड्यापौंड्राश्च; D1. 3. 7 चोडाः (D3 चोद्राः) पांड्याश्च. M1. 2 केरलाः (for भारत). K4 पांड्याश्चैव जनेश्वर. — K0. 1 om. (hapl.) $50^{c}$–$51^{b}$. — c) K3 G2 जानपदा. — d) K2 दक्षिणां. Ś1 K3 D1. 2. 9 पार्श्वम् (for पक्षम्). Ś1 आश्रितः; K3 D2. 6 आगताः; D1. 3 T2 आस्थिताः.

51 K3. 5 D2. 6 om. (hapl.) 51. K0. 1 om. $51^{a}$ (cf. v. l. 50). — a) Ś1 अग्निवैश्या; K2 Dn2 D4. 1. 1 अग्निवैश्या. B Da Dn1 D5 तुहुंडाश्च; Dn2 D1. 2. 3 गजतुंडा; D3 गजस्तुंडा; S जगत्कुंडा. K4 °वेश्या हुंडा*. — b) D3 मलदाभाश्च; T G1. 3. 4 M2 मलदा नाम (for पलदाशाश्च). K2 मलदा दासहारयः; K4 B1–3 Da D5 मालवा(B1 °लुका)श्च सकेरलाः; B4 Dn2 D4. 7. 8 मलदा दाश(B4 °स)कारयः; Dn1 मालवाश्चापि केशव; D1 मालवा तुंदकारिषाः; G2 मलदाना महारयाः; M1. 3. 4 मलयादा (M3 *inf. lin.* मलादाना; M4 महादाना) महारयाः; M5 मलया दामभारयाः. — c) K0–3 शरवास्; B2 D1 सबराः; B3 शबलाः. K0 तुंडुसाश्चैव; K1 तुभिसा°; K2 तंबुसा°; K4 उन्द्रसा°; B Da Dn1 D5 कुंतला°; Dn2 D4. 7. 8 कुंभसाश्चै(D3 °का चै)व; D1 M3. 5 बर्बु(M5 °र्दु)रा°; D3 भुभुसा°; T1 G हुहुरा°; T2 कर्डुरा°; M1. 2. 4 चहुला° (for तुम्बुपा°). — d) Ś1 ननृच; D3 साश्वश्च (for वत्साश्च). B3 सहनाकुलाः; Dn2 सह मालवैः. T1 G4 M3. 5 सद्श्वानां कुलैः सह; T2 G2. 3 M1 वत्साश्वानां कुलैः सह; G1 M2. 4 वत्साश्वानाकुलैः सह. — f) Ś1 K0 T3 M3 वामपार्श्वं; Da Dn D1. 4. 5 T1 G वामं पक्षं; D7. 8 K0–3 वामपक्षं (for वामं पार्श्वं). Ś1 G3 समाश्रितः; D1. 3 M1. 2 उपाश्रिताः; M4 समाश्रितौ.

52 a) K0 पक्षैः; K2. 4 B Da2 Dn D4. 5. 7. 8 पक्षः; K3. 5 Da1 D2 वक्षः; D1 पक्षे; D6 वक्ष्यः. — b) K0–2. 4 Dn1 D3 S शिरस्तु; D1 शिरसि. B3 नियुतं च शिरस्तथा; Cv as in text. Cc cites नियुतं. — c) D1 पृष्ठे चार्बुद°. — K5 om. $52^{de}$. — d) K4 चतुर्दश; D3 विशां पतिः (for च विंशतिः). — D4 om. (hapl.) $52^{ef}$. — e) T2 नासायां (for ग्रीवा°). D2 वापि. — f) K1 स (for च). D1 विंशतिः.

जग्मुः परिवृता राजंश्चलन्त इव पर्वताः ॥ ५३
जघनं पालयामास विराटः सह केकयैः ।
काशिराजश्च शैब्यश्च रथानामयुतैस्त्रिभिः ॥ ५४
एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः ।
सूर्योदयनमिच्छन्तः स्थिता युद्धाय दंशिताः ॥ ५५
तेषामादित्यवर्णानि विमलानि महान्ति च ।
श्वेतच्छत्राण्यशोभन्त वारणेषु रथेषु च ॥ ५६

इति श्रीमहाभारते भीष्मपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## ४७

संजय उवाच ।
क्रौञ्चं ततो महाव्यूहमभेद्यं तनयस्तव ।
व्यूढं दृष्ट्वा महाघोरं पार्थेनामिततेजसा ॥ १
आचार्यमुपसंगम्य कृपं शल्यं च मारिष ।
सौमदत्तिं विकर्णं च अश्वत्थामानमेव च ॥ २
दुःशासनादीन्भ्रातृंश्च स सर्वानेव भारत ।

C. 6. 2093
B. 6. 51. 3
K. 6. 51. 3

53 K5 om. 53. — a) Ś1 Ko. 1 पक्षि(Ś1 पंच)-कोटिषु पक्षेषु; K3 Da1 D2. 6 पक्षे कटिप्रदेशे तु (Da1 °शेषु); D1. 3 T1 G4 पक्षे कोटिः प्रपक्षेषु; G2 पक्षे कोटिप्र°; M3. 5 पक्षेषु च प्र°. Cc cites कोटिषु पक्षेषु. — d) Ś1 नदंत; Ko. 2 जलांत; T2 G1-3 चरंत (for चलन्त).

54 a) Dn2 जघन्यं; Cc. v °नं (as in text). — b) D8 स विरथः (for विराटः). K3. 5 Da1 Dn D2. 4. 6-8 कैकयैः. — c) K3 D1. 6 चैद्यश्च; D3 शैक्यश्च.

55 a) K3 Da1 D2. 6 M5 एवमेवं; K4. 5 °मेनं; T1 G2. 4 M1. 4 °मेतन्; T2 °मेव. — b) K1. 2 पांडवः; B Da Dn D4. 5. 7. 8 सत्तमाः (Da1 D8 °मः). D1 व्यूहमानाश्च पांडवाः. — c) K5 D6 °दयं समीक्ष्यं(K5 °क्षं)तः; B3 T2 °दयं त इच्छंतः; Da1 Cc °दयमनिच्छंतः; T1 G2. 4 सूर्यस्योदयमिच्छंतः; G1. 3 ते सूर्योदयमिच्छंतः; M1-3. 5 सूर्योदयं तमिच्छंतः. Ccp उदीक्षन्तः. — d) B2 स्थिरा. Ko-2 S दंसिताः. — After 55, D1 ins. a passage given in App. I (No. 5).

56 b) Da1 विमानानि; Dn2 D4 निर्मलानि; M4 नीलानि च. — c) G1. 3 पताकाग्राणि (for श्वेतच्छत्राणि). K4 B1. 2. 4 Da Dn1 D5. 7 [अ]दृश्यंत; Dn2 D1. 4. 8 दृश्यंते (for [अ]शोभन्त). — d) Ko-2 ध्वजेषु (for रथेषु).

Colophon. — *Sub-parvan:* Omitting sub-parvan name, Ko-3 D2. 6 द्वितीययुद्धदिवस; K4 द्वितीयदिनयुद्ध; K5 T1 G2. 4 द्वितीयदिवस; Da Dn1 D5 द्वितीयेह्नि; M1 द्वितीय; M4 द्वितीयाह्निक. — *Adhy. name:* K4 Da Dn1 D5 व्यूहरचनं (K4 Da1 °ना); G2 व्यूहकरणं; M1 क्रौंचव्यूहकथनं. — *Adhy. no.* (figures, words or both): Da2 8; Dn2 M5 48; D1 M3. 4 47; D5 50; T G 45; M1. 2 46 (as in text). — *Śloka no.:* Dn2 D5 59.

## 47

1 a) Ś1 K3 D2. 3. 6 दृष्ट्वा ततो; Ko. 2 दृष्ट्वा महा-; K1 दृष्ट्वा तथा; T2 तं ते महा-; G1. 3 नाम महा- (for ततो महा-). D8 क्रौंचं व्यूहमभेद्यं च; Cd क्रौंचं दृष्ट्वा तथा व्यूहम्. — b) D3 दृष्ट्वा तत्तनयस्तव. — c) Ś1 व्यूढं सज्जं; Ko. 2 D2 व्यूढं संख्ये; K1. 3. 4 D6 व्यूहं संख्ये; K5 B4 D1. 4. 7 T2 M1 व्यूहं दृष्ट्वा; B3 D3 रक्ष्यमाणं; D8 निर्मितं च (for व्यूढं दृष्ट्वा). Ś1 Ko-2 महापारं; G1. 3 महावेगः (for °घोरं). — d) K3 D2. 6 पार्थिवेनामितौजसा; K5 पार्थिवेनामिततेजसा (hypermetric); B1-3 पार्थेनादित्यतेजसा; B4 Da Dn D4. 5. 7. 8 पांडवेनामितौजसा; T2 पार्थेनाक्लिष्टकर्मणा.

2 b) Ko. 1 पार्थिव; K2 D3 पार्थिवः; K3 D2. 6 पार्थिवं; Da1 मारिषं (for मारिष). Ś1 कृपं सेश्वर-पार्थिवं. — c) Ś1 K5 D8 T2 G2 सोमदत्तिं; K1 सौमदंतिं; Da1 सोमदत्तं. K1 विकर्णश्च. — d) Ś1 K5 Dn2 साश्व°; Ko-2 B Da2 D3-5. 7. 8 सोश्व° (for अश्व°).

3 a) G3 °नार्दीश्च भ्रातरः (hypermetric). — b) B D (except D1-3. 6) T1 G सर्वानेव च भारत. — c)

C. 6. 2093
B. 6. 51. 3
R. 6. 51. 3

अन्यांश्च सुबहूञ्शूरान्युद्धाय समुपागतान् ॥ ३
प्राहेदं वचनं काले हर्षयंस्तनयस्तव ।
नानाशस्त्रप्रहरणाः सर्वे शस्त्रास्त्रवेदिनः ॥ ४
एकैकशः समर्था हि यूयं सर्वे महारथाः ।
पाण्डुपुत्रान्रणे हन्तुं ससैन्यान्किमु संहताः ॥ ५
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं पार्थिवसत्तमाः ॥ ६
संस्थानाः शूरसेनाश्च वेणिकाः कुकुरास्तथा ।
आरेवकास्त्रिगर्ताश्च मद्रका यवनास्तथा ॥ ७
शत्रुंजयेन सहितास्तथा दुःशासनेन च ।
विकर्णेन च वीरेण तथा नन्दोपनन्दकैः ॥ ८
चित्रसेनेन सहिताः सहिताः पाणिभद्रकैः ।
भीष्ममेवाभिरक्षन्तु सह सैन्यपुरस्कृताः ॥ ९
ततो द्रोणश्च भीष्मश्च तव पुत्रश्च मारिष ।
अव्यूहन्त महाव्यूहं पाण्डूनां प्रतिबाधने ॥ १०
भीष्मः सैन्येन महता समन्तात्परिवारितः ।

---

K1.3 अन्याश्च सु-; B4 अन्यांश्चापि. Ś1 राजन्; K5 D6 घोरान्; T1 G1.3.4 योधान् ( for शूरान् ). — $^{d}$) K3.5 D1.2.6 T G2.4 समुपस्थितान् ( for समुपागतान् ).

4 $^{b}$) K1 वर्षयं; K3 D8 हर्षयस्. K3 D2 तनयांस्; D6.8 G3 तनयं; G1 तनयास्; Cc तनयस् ( as in text ). D1 हर्षयंस्तव वाहिनीं. — $^{c}$) = 6. 23. $9^{c}$. Dn2 D4.7.8 नानाप्रहरणाः सर्वे. — $^{d}$) Ś1 सर्वशास्त्रास्त्रवेदिनः; K0 सर्वशस्त्रार्थ°; K1.2 सर्वे शास्त्रार्थ°; K4.5 B1.2 M1.2 सर्वशास्त्रार्थकोविदाः ( K5 °दर्शिना ); B3.4 Da Dn D1.4.5.7.8 सर्वे ( B3 नाना- ) शास्त्रार्थकोविदाः; D3 T2 सर्वे युद्ध( T2 शस्त्र )विशारदाः ( = 6. 23. $9^{d}$ ); T1 G1.2.4 सर्वे शस्त्रास्त्रकोविदाः; G3 M4 सर्वे शस्त्रार्थकोविदाः; M3.5 सर्वशस्त्रास्त्रकोविदाः.

5 $^{a}$) T2 G1.3 M1.3.5 एकैकं हि ( for °कशः ). K6 स पार्था हि. Cc cites समर्था ( as in text ). — $^{b}$) K5 स्वयं ( for यूयं ). — $^{d}$) K4.5 Da Dn D3–5.7.8 ससैन्याः. K3 D2.6 T1 G M3.5 संगताः; Cc संहताः ( as in text ).

6 = (var.) 6. 23. 10. — $^{b}$) K3 D2 बलं पार्थिवरक्षितं; K5 D3 ( marg. *sec. m.* as in text ) G1.3 बलं पार्थाभि°. — Da1 D3 om. $6^{cd}$. — $^{c}$) K6 अपर्याप्तमिदं तेषां; D3.4 पर्याप्तमिदमे°. — $^{d}$) K4 B Da2 Dn D4–7 T1 G4 बलं भीष्माभिरक्षितं ( = 6. 23. $10^{b}$ ); K6 बलं पार्थिवसत्तम.

7 $^{a}$) Ś1 सेनास्थाः; T2 समर्थाः; M2 सस्थानाः. B2 D1.6 सूर°. — $^{b}$) Ś1 K0 वेण्णिकाः; K1 वेनिकाः; K4 B Da Dn D4.5.7.8 विकर्णाः; K5 वंत्रिकाः; D1 वाह्लीकाः; D3 वार्ष्णिकाः; T1 G4 खर्वराः; T2 G1 M लब्धकाः; G2 कर्वकाः; G3 लुब्धकाः ( for वेणिकाः ). D1 M4 कुक्कुरा°; D6 कुरुरा°. — D3 om. ( hapl. ) $7^{cd}$. — $^{c}$) K0–2 आ( K1 अ )वेरकास्; K3 D2.6 आराविकास्; K4 B1.2.4 Da2 Dn D4.5.7 रेचकाश्च; K5 आरोधिकास्; B3 D3 T G3.4 M5 आरोचकास्; D8 केरलाश्च; D1 आत्रेयकास्; G1.2 M1–4 अरोचकास्. K1 त्रिगंता°; D2 त्रिवर्गा°; G2 त्रिकर्ता°. — In K3, $7^{d}$–$8^{d}$ is lost on a damaged fol. — $^{d}$) Ś1 मभ्रकाः; T2 G1–3 M भद्रका. G2 यौवना°.

8 K4 damaged. — $^{a}$) K1 शत्रंजयेन; K3 D1.2 शत्रूञ्जयैरन्; D1 कुंतलैयेन; M1 ( *sup. lin.* as in text ). 3.5 श्रुतंजयेन. T1 तथा शत्रुंजयेनैव. — D3 om. ( hapl. ) $8^{b}$–$9^{a}$. — $^{b}$) T2 हिता ( for तथा ). B3 D7 ह; Dn1 D4 हि ( for च ). — $^{c}$) B2.4 Dn1 ( after corr. ) n2 D4.7 सुवीरेण; Da Dn1 ( before corr. ) n3 सुवर्णेन; D1 च शूरेण; S ( except T2 ) तु वीरेण. — $^{d}$) K3 D2.3.6 चित्र- ( for तथा ). M2 °नंदकः; Cc °नंदकैः.

9 D4 M1 om. ( hapl. ) $9^{ab}$. D3 om. $9^{a}$ ( cf. v. l. 8 ). — $^{b}$) K3 D1.2.6 तथा वै ( for सहिताः ). K1 पानिवद्रकैः; K2 प्राणिभ°; K3.5 D2.6 पारिभद्रकाः; B Da Dn D5.7.8 सणिभद्रकैः; D1.3 T2 M3.4 पारि°; T1 G M2.5 परिचारकैः ( for पाणिभद्रकैः ). — $^{c}$) = 6. 23. $11^{c}$. K2 भीष्मसेनाभि°. — $^{d}$) D1.3 T1 G1.2 M1–4 सर्व- ( for सह ). K0.2 सहसैन्याः पु( K2 °न्याभि )रस्कृताः; K3.5 D2.6 सह सैन्यैः पुरस्कृतैः; B Da Dn D4.5.7.8 सह सैन्यपुरःसराः; G4 सर्वसैन्यसमन्विताः.

10 $^{a}$) K0.1 तथा ( for ततो ). K5 B Dn3 D3.4.7.8 M4 transp. द्रोणश्च and भीष्मश्च. — $^{b}$) K0.1.4 B Da Dn D4.5.7.8 G1 पुत्राश्च. Da1 Dn1 मारिष. T2 द्रोणपुत्रश्च मारिष. — $^{c}$) K3 D2.6 तथा ( for महा- ). — $^{d}$) K2 पांडवानां ( hypermetric ); K4 G3 M1.3–5 पांडवान्; B Da Dn D4.5.7.8 पार्थानां ( for पाण्डूनां ). K5 प्रतिबांधवं; Da2 प्रतिबंधने; D3 बाधनं; G1 °बाधते. D1 पांडून्प्रति निवारणं; T G2.4

ययौ प्रकर्षन्महतीं वाहिनीं सुरराडिव ॥ ११
तमन्वयान्महेष्वासो भारद्वाजः प्रतापवान् ।
कुन्तलैश्च दशार्णैश्च मागधैश्च विशां पते ॥ १२
विदर्भैर्मेकलैश्चैव कर्णप्रावरणैरपि ।
सहिताः सर्वसैन्येन भीष्ममाहवशोभिनम् ॥ १३
गान्धाराः सिन्धुसौवीराः शिबयोऽथ वसातयः ।
शकुनिश्च स्वसैन्येन भारद्वाजमपालयत् ॥ १४
ततो दुर्योधनो राजा सहितः सर्वसोदरैः ।
अश्वातकैर्विकर्णैश्च तथा शर्मिलकोसलैः ॥ १५
दरदैश्चूचुपैश्चैव तथा क्षुद्रकमालवैः ।
अभ्यरक्षत संहृष्टः सौबलेयस्य वाहिनीम् ॥ १६
भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष ।
विन्दानुविन्दावावन्त्यौ वामं पार्श्वमपालयन् ॥ १७
सौमदत्तिः सुशर्मा च काम्बोजश्च सुदक्षिणः ।
शतायुश्च श्रुतायुश्च दक्षिणं पार्श्वमास्थिताः ॥ १८
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः । C. 6. 2109 B. 6. 51. 19 K. 6. 51. 19

---

M2 पांडवान्प्रतियो( T2 °द्यो )धने.

11 a) K1 Da1 भीष्म-; T2 भीम-. — K1 om. 11b. — c) D3 प्रहर्षन्; G2 प्रकार्षीन्. K1.2 महती. D1 ययौ प्रहर्षयन्राजन्. — d) K3 पुर° (for सुर°).

12 a) K5 B3 G2 M4 तमन्वियान्; D8 तमन्वयन्; T2 तमादाय. — b) Ko भारध्वाजः; K1.2 भारद्वाज-; D5 M1 भरद्वाजः.

13 ab) Ś1 दवलैश्; Ko.2 मेलकैश्; K1.5 मङ्कैश्; Da1 मकलैश्; D3 रेकलैश्; S (except T2) मेखलैश् (for मेकलैश्). K3.4 D2.6 तथा (for अपि). K5 कर्णप्रावरकैस्तथा. D1 वैदर्भमेखलेयैश्च दुर्दुरैश्च सकैरपि. — c) Ś1 संहताः; K1 सहिता; B1 सहितैः; D1.2 G1 सहितः. Ś1 Ko-2 सर्वसैन्येषु. — d) D1 भीष्मसेवा-भिपालयन्.

14 a) Ś1 Ko.2 D1 गांधार-; K1 गंधार-. — b) = 6. 18. 12d. Ś1 Ko-2 Da1 Dn D1.4.7 M4 शिवयो; D2 शवयो. B Dn2 D6.7 वशातयः; G3 वसा°. M1-3.5 सौबलश्च जयद्रथः. — c) K1 शक्तिनिश्च सुसैन्येन; K5 Dn2 D4.7 M3 (inf. lin.).4 शकुनिश्च सर्वे°; M1-3.5 शकुनिः सह सै°. — d) Ko भारध्वाजम्; Da1 M1 भरद्वाजम्. K2 M5 अपालयन्.

15 K2 om. (hapl.) 15–17. — a) D1 तस्थौ (for ततो). — b) D3 स ह (for सर्व-). — c) K1 अश्वातकैर्; K5 अथांतकैर्; D1 अस्माकैश्च; D3 अस्वात-कैश्; D6 अश्वांतकैर्; D8 अश्वत्थाम्ना; S (except T2) अश्मंतकैर् (for अश्वातकैर्). D3 त्रिगीर्णैश्च; T1 G1.3.4 निषण्णैश्च; G2 निषादैश्च; M निकीर्णैश्च (for विकर्णैश्च). — Da1 om. 15d. — d) Ko.1 चर्मिल°; K3.5 D2.6 वर्मि( K5 चर्मा )लकोशलैः; K4 B चांबष्टकोश( K4 °स )-लैः; Da2 D5.7.8 चामलकोश°; Dn D4 वामनकोस-( Dn1 °श )लैः; D1 द्रविडकोश°; D3 चांबिककोश°; S काश्मीरकोस°; text as in Ś1 only.

16 K2 om. 16 (cf. v. l. 15). — a) Ko चर्म-पैश्चैव; K1 चमपै°; K3 D2 चुवुपै°; K4 B Da Dn1 D5 च शकै°; K5 वपुपै°; Dn2 D4.7.8 च वृकै°; D1 च खसैश्चापि; D3 चांधकैश्चैव; D6 चांवुपै°; G2 चुचुपै°; M3-5 चूचुकै°. — b) Ko तथा क्षुद्रकसालवैः; K5 तथा क्षुद्रकमालकैः. — c) K3.5 D2.6 M1 अभ्यरक्षंत; K4 °धावत; B Da Dn D4.5.7.8 °द्रव( Dn2 °वं )त. K3.5 Dn2 D2.4.6 संहृष्टाः. — d) K3 D2.6 सौबलस्य च; K4 B Da Dn D4.5.7.8 पांडवेयस्य; D1 सौबलेयश्च.

17 K2 om. 17 (cf. v. l. 15). — a) D1 शल-श्चैव; D4 शरः शल्यो; T2 शूलशल्यो (for शलः शल्यो). — b) D1 वीर्यवान् (for मारिष). — d) Ś1 K5 Da2 D3.5.7.8 वामपार्श्वम्; S (except M2) वामं पक्षम्. K3 D6 M2 अपालयत्.

18 a) Ś1 D6 सोमदत्तिः; Ko-2 D1 S सोमदत्तः. K2 सुसर्मा; K3 D2 (*sup. lin.* as in text) सुकर्मा. — b) Ś1 कांभोजश्च; K1 कांभू°. — c) T2 जरा° (for श्रुता°). K3 D2.3 शतायुश्चाश्रुतायुश्च; K4 B Da2 Dn D4.5.7.8 G1-3 M1.2.5 श्रुतायुश्चाच्यु( D4 °यु )तायुश्च; Da1 श्रुतायुताश्चायुताश्च; T1 G4 श्रुतायुश्चाश्रुतायुश्च; M3.4 श्रुतायुश्चाश्रुतर्वा च. — d) Ś1 Dn D1.3-5 S पक्षम् (for पार्श्वम्). Ko-2.5 B D1.4 S आश्रिताः.

19 a) K4 B Da Dn D4.5.7.8 चापि (for चैव). D1 सोमशर्मा सुशर्मा च. — b) Ko-2 D3 शाश्वतः; K1 सौबलः. — B1.3.4 Da Dn D5.7.8 om. 19cd.

C. 6. 2109
B. 6. 51. 19
K. 6. 51. 19

महत्या सेनया सार्धं सेनापृष्ठे व्यवस्थिताः ॥ १९
पृष्ठगोपास्तु तस्यासन्नानादेश्या जनेश्वराः ।
केतुमान्वसुदानश्च पुत्रः काश्यस्य चाभिभूः ॥ २०
ततस्ते तावकाः सर्वे हृष्टा युद्धाय भारत ।
दध्मुः शङ्खान्मुदा युक्ताः सिंहनादांश्च नादयन् ॥ २१
तेषां श्रुत्वा तु हृष्टानां कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ २२
ततः शङ्खाश्च भेर्यश्च पेश्यश्च विविधाः परैः ।
आनकाश्चाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ २३
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
प्रदध्मतुः शङ्खवरौ हेमरत्नपरिष्कृतौ ॥ २४
पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ २५
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ २६
काशिराजश्च शैब्यश्च शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्च महायशाः ॥ २७
पाञ्चाल्यश्च महेष्वासो द्रौपद्याः पञ्च चात्मजाः ।

---

K4 B2 read $19^{cd}$ after 20. — $^{d}$) D1 सैन्यपृष्ठे. Ś1 K5 D6 व्यवस्थितः.

20 $^{a}$) B1. 2. 4 Dn1 D1. 4. 6. 8 °गोपाश्च; B3 °गोप्ता च. — $^{b}$) K1. 5 D3 नानादेशा; K4 B D8 G3 °देश°. K5 जनाधिपाः; M नरेश्वराः (M4 नराधिपाः). Da Dn D1. 4. 5 नानाजनपदेश्वराः. — $^{c}$) K0. 2 वसुदानाश्च; K1 वसुधानाश्च. — $^{d}$) K5 काश्यपस्य च (sic). Ś1 दांभिकः; K0 चाबिभुः; K1 D1. 3 चाभिभुः; K2 B4 चाविभूः; K4 *भिभूः; B3 मारिष; Da1 Dn2 D4. 7. 8 Cap Cc वा विभुः; Da2 D5 वाभिभूः; Dn1 वाविभूः; G2 साहिभूः; Ccp आविभुः. Ca cites अभिभूः. K3 D2. 6 ये चान्ये पृथिवीक्षिताः. — After 20, K4 B2 read $19^{cd}$.

21 $^{a}$) K2 ततस्तु (for ततस्ते). T2 G1. 3 ते तु नराः; G2. 4 तेषु नराः (for ते तावकाः). K5 ततः स्वरायुताः सर्वे. — $^{b}$) S युक्ताश्च (for युद्धाय). — $^{c}$) M2 महेष्वासाः (for मुदा युक्ताः). — $^{d}$) Ś1 Da1 D4 सिंहनादाः. K0–2 अनादयन्; K3 D2. 6 च नेदिरे; K4. 5 B3 Da Dn D1. 4. 5. 7. 8 M4 तथानदन्; B1. 2. 4 D3 तथोन्नदन्; M1–3. 5 च नानदन्.

22 $^{a}$) K5 transp. श्रुत्वा and तु. K0–2 श्रुत्वा प्र°; K3 D2. 6 श्रुत्वा सु°; T1 G3. 4 श्रुत्वाशु (for श्रुत्वा तु). — $^{b}$) = 6. 23. $12^{b}$. B1 D1. 3 वृद्धः कुरुपितामहः. — $22^{cd}$ = 6. 23. $12^{cd}$. — $^{d}$) K0 शंखान्दध्मुः प्रता°.

23 = (var.) 6. 23. 13. — $^{b}$) Ś1 चापाश्च; K0. 1 पेटाश्च; K2 पेथश्च; K5 पणवा; Da D5 पेष्यश्च; D1 घोषाश्च (for पेश्यश्च). K0–2 परे. K3 D3 G2 पणवानकगोमुखाः (= 6. 23. $13^{b}$); D2. 6 पणवा गोमुखास्तथा; T G1. 3. 4 M पणवाश्च विशां पते. — $^{c}$) K0–2 आनका (K0 °कां) चाभिहन्यंत; K3 D2. 6 सहसैवाभ्य° (= 6. 23. $13^{c}$); T G4 M आनकाश्चाभ्यवाद्यंत (M °द्यंतः); G1 आनंदकाश्चावाद्यंत; G2 आनर्तकाश्च वाद्यंत; G3 आनकाश्चापि वाद्यंते. — $^{d}$) = 6. 23. $13^{d}$. K... Da1 D2. 3. 6 तुमलो. M3. 5 महान् (for ऽभवत्).

24 $24^{ab}$ = 6. 23. $14^{ab}$. — $^{a}$) M1–3 श्वेतहयैः. Da2 D2. 5 G1 युक्तैर्. — D1 om. (hapl.) $24^{a}$. — $^{c}$) B1. 2 दध्मतुस्तौ (for प्रदध्मतुः). G3 शंखवरौ. B3 दध्मतुः शंखप्रवरौ; D8 अदध्मतुः शंखप्रवरौ (hypermetric). — $^{d}$) K5 D2. 3. 6 हेमरत्नपरिस्कृतौ; B D... Dn D4. 5. 7. 8 हेमरत्नविभूषितौ; T2 हेमद्युम्नपरिष्कृते.

25 = 6. 23. 15. — $^{c}$) D2. 3 पौंढ्रं. K0 दध्मुः... D1 S तथैव बलवान्राजन् (D1 °वान्गर्जन्; T G... °वद्राजन्).

26 = 6. 23. 16. — K2 om. (hapl.) $26^{ab}$. — For 26, D1 S subst.:

157* युधिष्ठिरश्च धर्मात्मा माद्रीपुत्रौ च पाण्डवौ ।
अभिमन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
[(L. 2) = (var.) 6. 23. $6^{cd}$.]

27 $^{a}$) K1 काश°; G2 काशी°. D3 M4 चैद्यश्च. M1–3. 5 विक्रांतः (for शैब्यश्च). D1 काशिराजः शिखंडी च; T1 G4 शैब्यश्च काशिराजश्च. — $^{b}$) = 6. 23. $17^{b}$. D1 धृष्टद्युम्नो (for शिखण्डी च). K1. 3 Da1 °रथः. — Dn1 D8 om. (? hapl.) $27^{cd}$. — $^{c}$) = 6. 23. $17^{c}$. D1 विराटश्च महेष्वासः. — $^{d}$) K1 सातिकिश्च; G3 सात्विकिश्च. K1 पराजितः; K2. 3. 5 B Da Dn D1. 4. 6. 7 T G2. 4 महारथः (for °यशाः).

सर्वे दध्मुर्महाशङ्खान्सिंहनादांश्च नेदिरे ॥ २८
स घोषः सुमहांस्तत्र वीरैस्तैः समुदीरितः ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयत् ॥ २९
एवमेते महाराज प्रहृष्टाः कुरुपाण्डवाः ।
पुनर्युद्धाय संजग्मुस्तापयानाः परस्परम् ॥ ३०

इति श्रीमहाभारते भीष्मपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## ४८

धृतराष्ट्र उवाच ।
एवं व्यूढेष्वनीकेषु मामकेष्वितरेषु च ।
कथं प्रहरतां श्रेष्ठाः संप्रहारं प्रचक्रिरे ॥ १
संजय उवाच ।
समं व्यूढेष्वनीकेषु संनद्धा रुचिरध्वजाः ।
अपारमिव संदृश्य सागरप्रतिमं बलम् ॥ २
तेषां मध्ये स्थितो राजा पुत्रो दुर्योधनस्तव ।
अब्रवीत्तावकान्सर्वान्युध्यध्वमिति दंशिताः ॥ ३
ते मनः क्रूरमास्थाय समभित्यक्तजीविताः ।
पाण्डवानभ्यवर्तन्त सर्व एवोच्छ्रितध्वजाः ॥ ४

C. 6. 2124
B. 6. 52. 4
K. 6. 52. 4

28 [a]) Ś1 K4 B1.2 Da D5 S (except M1.4) पांचाल्याश्च; D1 पांचालश्च. Ś1 K4.5 Da D5.7 S (except M1.4.5) महेष्वासा. — [b]) B1.2.4 Da Dn D1.4.5.7.8 द्रौपदेयाश्च पंच ये (D1 °श्च मारिष); B3 सौभद्रो द्रौपदीसुताः; G3 द्रौपद्याः पांडवात्मजाः. — [d]) K2 च निंदिरे; B3 विनेदिरे; D8 च भेजिरे.

29 [a]) K1.5 D1.8 सु- (for स). T2 स घोषस्तु; G1.3.4 ततः शब्दो (for स घोषः सु-). G2 ततस्तत्र महाञ्छब्दो. — D1 om. 29[c]–30[d]. — 29[cd] = (var.) 6. 43. 19[cd]. — [c]) K5 D6 नभस्तलं च पृथिवीं. — [d]) K3.5 Da1 D2.3.6 तुमलो. Ś1 Ko.5 Da1 D6 T2 G1.2 व्यनुनादयन्; B Da2 Dn2 D4.5 [ऽ]भ्यनुनादयत्; Dn1 M1–3.5 [ऽ]भ्यनुनादयन्; D7 [ऽ]भ्यन्वनादयत्; T1 G4 व्यन्वनादयत्; M4 [ऽ]प्यनुनादयन्.

30 D1 om. 30 (cf. v. l. 29). — [a]) G1 एवमेव. — [b]) T1 G2–4 प्रवृद्धाः (for प्रहृष्टाः). B3 संप्रहृष्टाश्च पांडवाः. — [c]) M4 मुहुर् (for पुनर्). G1.3 संनद्धास् (for संजग्मुस्). — [d]) Ś1 K3 तापयानः; K5 स्नापयंतः; Da Dn1 D5 त्रासयानाः; Dn2 तपयानाः; T G2.4 स्नापयंतः; G1.3 M तापयंतः (for तापयानाः).

Colophon om. in Ś1. — *Sub-parvan:* Omitting sub-parvan name, Ko–3 D2.6 mention only द्वितीययुद्धदिवस; K4, likewise, द्वितीयदिनयुद्ध; K5 T2 G2 द्वितीयदिवस; M1 द्वितीयेहनि; M2 द्वितीयेह्नि; M4 द्वितीयाह्निक. — *Adhy. name:* K4 Da Dn1 D5 व्यूहरचना; T2 G2 धार्तराष्ट्रव्यूहकरणं. — *Adhy. no.* (figures, words or both): Dn2 M5 49; D1 M3.4 48; D5 51; T G 46; M1.2 47 (as in text). — *Śloka no.:* Dn D5 29.

### 48

1 1[ab]) = 6. 42. 1[ab]. — [a]) K2 Da1 D8 -व्यूहेष्व°; Cd व्यूढेष्व° (as in text). — [b]) K2 मामकेपितरेषु (sic); D6 °केष्वपरेषु; T1 G4 पांडवेष्वितरेषु. — [c]) T2 कथं प्रहारं संनद्धा; G1.3 कथं परमसंरब्धं. — [d]) D8 संप्राहारं; T2 नृपश्रेष्ठ; M2 सगरं सं-; Cc.d संप्रहारं (as in text). G1.3 प्रचक्रमे.

2 [a]) Ko.1.4 B3 एवं; D1 S तथा; Cc समं (as in text). K1.2 व्यूढेषु नीकेषु; Da1 D6.8 व्यूहेष्व°. — [b]) Ś1 संवद्धा रुचिर°; K4 B1–3 T1 G1.3.4 M संनद्धरुचिर°; K5 संनद्धाः सुचिरं द्विजाः; B4 °द्धरुचिरप्रभाः; D1 संरब्धा रुचिरध्वजाः; D3 संनद्धं रुचिरध्वजं; G2 संनद्धा रुचिरा ध्वजाः. Some printed ed. संनद्धरुचिरध्वजं. Cc cites सन्नद्ध-. — After 2[ab], S ins.:

158* तावकाः पाण्डवैः सार्धं यथायुध्यन्त तच्छृणु ।

— [c]) Ko तद्दृश्यं; K1 सदृशं; K2 Da1 D1.2 दृश्यंत; K3 दृश्यंते; B1 संदिश्य; Dn2 दृश्यंतं. Ś1 अपरमिव तद्दृष्यं; K5 अपरे संप्रहृष्यंत.

C. 6. 2125
B. 6. 52. 5
K. 6. 52. 5

ततो युद्धं समभवत्तुमुलं लोमहर्षणम् ।
तावकानां परेषां च व्यतिपक्तरथद्विपम् ॥ ५
मुक्तास्तु रथिभिर्बाणा रुक्मपुङ्खाः सुतेजनाः ।
संनिपेतुरकुण्ठाग्रा नागेषु च हयेषु च ॥ ६
तथा प्रवृत्ते संग्रामे धनुरुद्यम्य दंशितः ।
अभिपत्य महाबाहुर्भीष्मो भीमपराक्रमः ॥ ७
सौभद्रे भीमसेने च शैनेये च महारथे ।
केकये च विराटे च धृष्टद्युम्ने च पार्षते ॥ ८
एतेषु नरवीरेषु चेदिमत्स्येषु चाभितः ।
ववर्ष शरवर्षाणि वृद्धः कुरुपितामहः ॥ ९
प्राकम्पत महाव्यूहस्तस्मिन्वीरसमागमे ।
सर्वेषामेव सैन्यानामासीद्व्यतिकरो महान् ॥ १०
सादितध्वजनागाश्च हतप्रवरवाजिनः ।
विप्रयातरथानीकाः समपद्यन्त पाण्डवाः ॥ ११
अर्जुनस्तु नरव्याघ्रो दृष्ट्वा भीष्मं महारथम् ।
वार्ष्णेयमब्रवीत्क्रुद्धो याहि यत्र पितामहः ॥ १२

---

3 a) K1. 2 मध्य-. D5 स्थिरो. K B D (except D1. 8) T2 राजन् (for राजा). — d) K5 युद्धस्व. K0–2 G1. 3 M1. 3. 5 दंसिताः; D1 T G2. 4 M2. 4 दंसि- (D1 °शि )तान्. — After 3, B4 *repeats* 2cd; while D3 *repeats* 6. 47. 10.

4 = (var.) 6. 43. 7. — a) D3 शूरम्. Ś1 K0–3 आदाय; K5 G3 आधाय (for आस्थाय). — c) K1 अभिवर्तंत; D1 अभ्यवर्षत. — d) K5 एवोच्छ्रितो द्विजाः; D2 एवोत्सृतध्वजाः.

5 a) K3 D6 सुतुमुलम् (for समभवत्). — b) K1. 5 Da1 D2. 8 तुमलं; K3 D6 अभवल्. K0. 2 S रोम° (for लोम°). — d) Ś1 व्यतिपक्तरथध्वजं; D1 व्यक्तमश्वरथद्विपं; D4. 8 M1 व्यतिपिक्तरथ°; T1 G4 M3–5 व्यतिरिक्तरथ°; G3 व्यतिपक्तमथ द्विपं. Cc cites व्यतिपक्ताः; Cd °पिक्तं.

6 = (var.) 143*. — a) D8 प्रमुक्ता (for मुक्तास्तु). K3 D2. 6 राजभिर्. B3 मुक्ता दुरात्मभिर्बाणा. — b) Ś1 K3. 5 D2. 3. 6. 8 M1 सुतेजसः; B Dn2 D4. 7 सुतेजिताः. D1 तन्मुखाश्च सुतेजसाः. — c) S अतीवोग्रा (for अकुण्ठाग्रा). — d) K3 D2. 6 मातंगेषु (for नागेषु च). D5 महाहये (for हयेषु च).

7 b) K5 धनुरादाय. K0–2 T2 G M1. 3–5 दंसितः; K3–5 B दंशिताः; T1 M2 दंसिताः. — After 7ab, S, omitting 7cd, reads 9cd. — c) Dn2 D4. 7. 8 अभिपद्य. K3 महाबाहुं. Cv अभिमन्युर्महा°.

8 b) Ś1 K3. 5 D2. 3. 6 सात्यकौ; K0 सातिकौ; K1 सत्यकौ; K2 सात्यके; K4 B Da Dn D4. 5. 7. 8 अर्जुने; D1 सात्वते (for शैनेये). — c) K1. 3–5 B Da Dn D2. 4. 5. 8 कैकेये च; D1 G2 कैकेयेषु; D3. 6. 7 कैकये च; T1 G4 कैकयेषु; T2 G1. 3 M1. 3–5 केकयेषु. [illegible] G विराटेषु (for विराटे च).

9 a) K2 B3 D4 (before corr.). 7 नववीरेषु; [illegible] नरसिंहेषु. — b) K0 चाविभुः; K2 चाविभुः; K3 [illegible] चाभिभो; K4 च प्रभो; K5 चादिभिः; B1. 2. 4 वा[illegible]भूः; B3 वाविभूः; Da1 वाभिभुः; Da2 Dn1 D5 [illegible]भिभूः; Dn2 D4. 7. 8 वा विभुः; D1. 2 (before corr.) चाभिभौ; D2 (marg. *sec. m.*) चादिभूः; D3 चाभिभु (for चाभितः). Cd cites अभिभूः. K1 चेदिमत्स्येभि भारिषु; S चेदिम( T1 G4 °मा )त्स्यक( G2 M5 °कु )[illegible]शिषु; text as in Ś1 only. — S reads 9cd after 7ab. — d) D1 क्रुद्धः (for वृद्धः). K3. 5 D2. 6 S कुरुवृद्धः पितामहः (= 6. 23. 12b).

10 a) Ś1 नाकंपत; K0. 1 प्रकंपत; K2 प्रकंपेत; K3 D6 प्राक्रम्यत; D3 अभिद्यत; T1 G4 M1. 3. 4 अभिनत्तं; T2 अभिसक्तं; G1. 3 M2. 5 अभिनर्क्तं; G2 अभिनर्तं (for प्राकम्पत). Ś1 K Da1 Dn1 D1–3. 6 ततो व्यूहस्; D8 S महाव्यूहं. — b) D8 अस्मिन्. D1 S °वरक्षये (for °समागमे). — c) G1. 3 °षां चैव (for °षामेव).

11 a) K1 सादित्य-; K2 सादितो; K3 D2 कि- सादि-; K4 शातित-; D3 सादिनो; Cd सादिता (for सादित-). D3 M तु (for च). K5 सादिनध्वजगोघ्नश्च; B Da Dn D4. 5. 7. 8 सादिनो ध्वजिनश्चैव; D1 सादिनो हतनागाश्च; T2 सादिनो ध्वजनादाश्च. — b) B D (except D2. 3. 6) हताः (for हत-). — c) K3 विप्रयात रथानीकान्; K5 D1 विप्रद्रुतरथानीकाः; B3 विप्रयाता रथा°; D4 विप्रयांति रथा°; D3 विप्रजातरथा°; S विप्र( M4 प्रवि )कीर्णरथा°. Ca. d cite विप्रयातं.

12 a) Da2 D1. 5 S ततोऽर्जुनो (for अर्जुनस्तु). T1 [illegible]

एष भीष्मः सुसंक्रुद्धो वार्ष्णेय मम वाहिनीम् ।
नाशयिष्यति सुव्यक्तं दुर्योधनहिते रतः ॥ १३
एष द्रोणः कृपः शल्यो विकर्णश्च जनार्दन ।
धार्तराष्ट्राश्च सहिता दुर्योधनपुरोगमाः ॥ १४
पाञ्चालान्निहनिष्यन्ति रक्षिता दृढधन्वना ।
सोऽहं भीष्मं गमिष्यामि सैन्यहेतोर्जनार्दन ॥ १५
तमब्रवीद्वासुदेवो यत्तो भव धनंजय ।
एष त्वा प्रापये वीर पितामहरथं प्रति ॥ १६
एवमुक्त्वा ततः शौरी रथं तं लोकविश्रुतम् ।
प्रापयामास भीष्माय रथं प्रति जनेश्वर ॥ १७
चञ्चद्बहुपताकेन बलाकावर्णवाजिना ।
समुच्छ्रितमहाभीमनदद्वानरकेतुना ॥ १८
महता मेघनादेन रथेनादित्यवर्चसा ॥ १८
विनिघ्नन्कौरवानीकं शूरसेनांश्च पाण्डवः ।
आयाच्छरान्नुदञ्शीघ्रं सुहृच्छोकविनाशनः ॥ १९
तमापतन्तं वेगेन प्रभिन्नमिव वारणम् ।
त्रासयानं रणे शूरान्पातयन्तं च सायकैः ॥ २०
सैन्धवप्रमुखैर्गुप्तः प्राच्यसौवीरकेकयैः ।

C. 6. 2141
B. 6. 52. 21
K. 6. 52. 21

---

G महातेजा ( for नरव्याघ्रो ). — $^{b}$) D8 नराधिपं ( for महारथम् ). — $^{c}$) T1 G4 कृष्ण ( for क्रुद्धो ). — K0. 1 om. ( hapl. ) $12^{d}$–$13^{a}$. — $^{d}$) K3 पाहि; K3 Da1 यो हि ( for याहि ). K2 Da1 पितामह.

13 K0. 1 om. $13^{a}$ ( cf. v. l. 12 ). — $^{a}$) K3 इति ( for एष ). K3 D2. 6 स्वयं क्रुद्धो; G1. 3 M सुसंरब्धो. — $^{b}$) Ś1 K1 सम- ( for मम ). — $^{c}$) K0–2. 5 वि- (K0 व्य )नाशयति; D4. 8 क्षपयिष्यति ( for नाश° ). K3 D8 सुव्यक्तो; D1 S संग्रामे; Ca सुव्यक्तं ( as in text ). — $^{d}$) K0 °हितं; K2 °हते ( for °हिते ).

14 K5 G3 om. ( hapl. ) $14^{c}$–$15^{d}$. — $^{c}$) K3 धार्तराष्ट्रश्च सहितो.

15 K5 G3 om. 15 ( cf. v. l. 14 ). In K4, this st. is lost on a damaged fol. — $^{a}$) Ś1 B2–4 D4 T1 G4 M5 पंचालान्; K1 पंचाला; K2 पांचाला; T2 पांचाल्यान्. M3–5 विधमिष्यंति ( for निहनि° ). — $^{b}$) K0–3 B D ( except D3 ) T2 G1. 2 M3 °धन्विना; Ca °धन्वना ( as in text ). — $^{c}$) B Da Dn D4. 5. 7. 8 वधिष्यामि; D1 S ( G3 om. ) हनिष्यामि.

16 $^{b}$) K3 D2. 6 भव यत्तो ( by transp. ). — K2 om. ( hapl. ) $16^{cd}$. — $^{c}$) K3–5 B D त्वां ( for त्वा ). K4 B1. 3. 4 प्रापयिष्यामि ( for प्रापये वीर ).

17 $^{a}$) K3 D6 शौरि; D2. 3 सौरी; S कृष्णो. — $^{c}$) K4 प्रेर°; D1 S प्रेष° ( for प्राप° ). K2. 3 B Dn2 D1–4. 6–8 S भीष्मस्य. — $^{d}$) Da1 D8 जनेश्वरः.

18 $^{a}$) K3 D2. 6 पंचवर्णपता°; K4 B Da Dn D1. 4. 5. 7. 8 T1 G2–4 M1–3. 5 चलद्बहुपता°; K5 एवं बहुपता°; D3 चंचुबहुपता°; T2 G1 पश्चाद्बहुपता°. Cd cites चञ्चद्- ( as in text ). — $^{b}$) K0 बलाङ्गांधर्ववाजिना; K1 बलगङ्गंगवंवार्जिना ( corrupt ); K2 Da2 Dn D4 Cc बलाका( K2 °ङ्गा )वल्गुवाजिना; K3 D2. 6 रथेनाप्रतिमेन च; D8 बलाकावल्गुपापिना; M2 बलाकार्णववाजिना. — $^{c}$) K0–2 D6 समुच्छ्रितं महाभीमं; Da1 °स्थितमहाभीम-; D3 G3 °च्छ्रितमहाभीमं. — $^{d}$) K5 T2 -नदन्वानर°; M1 ( *inf. lin.* as in text ). 2. 3. 5 -वरवानर°. — After $18^{cd}$, D1 ins. :

159* लाङ्गूलास्फोटशब्देन स्वनयानो नभस्तलम् ।
पिङ्गाक्षैर्दृष्टिपातैश्च भीषयन्नरिसैनिकान् ।

— D6 om. $18^{e}$–$19^{d}$. In G1, $18^{ef}$ is lost on a damaged fol. — $^{f}$) Ś1 K ( K4 damaged ) D2. 3 रथेनामिततेजसा.

19 D6 om. 19 (cf. v. l. 18). — $^{b}$) K1. 2 शूरसेनां च; K3 D3 सूरसेनांश्च; T1 G2. 4 शूरघ्नोपि च; G1. 3 अभ्रांतोपि च. — $^{c}$) K0–4 B2. 4 D2. 8 S प्रा( K0–2 आ )याच्छरणदः शीघ्रं; K5 प्रायाच्च स रणे शीघ्रं; B1 Da D5 आगच्छंतं रणे शीघ्रं; B3 प्रायात्स तु रणे वीरः; Dn D4. 7. 8 आगच्छत रणे शीघ्रं; D1 प्रायच्छन्रणदः शीघ्रं. — $^{d}$) K0–3 D2 सुहृच्छोकविना°; K4 सुहृदां * विनाशनः; K5 B Da Dn D1. 3–5. 7. 8 S सुहृदां ( M2 द्विषतां ) हर्षवर्धनः. Only Ś1 reads $19^{cd}$ as in text.

20 $^{b}$) K5 प्रभिन्नवरवारणं. Ca cites प्रभिन्नम् ( as in text ). — $^{c}$) Ś1 त्रासमाने; K3. 5 B4 Da Dn1 D2. 5. 6 S त्रासयंतं ( K5 °ते ); D3 ( marg. *sec. m.* as in text ) असयानं. K1 शूरः. D8 त्रासयन्नितराञ्छूरान्. — $^{d}$) K5 प्रापयंतं; B1. 2. 4 पातयानं; B3 G1 मर्दयंतं; D1 दारयंतं; D5 अर्दयंतं; D8 पातयंतश्; T1 G2–4 स्तंभ-

C. 6. 2142
B. 6. 52. 22
K. 6. 52. 21

सहसा प्रत्युदीयाय भीष्मः शांतनवोऽर्जुनम् ॥ २१
को हि गाण्डीवधन्वानमन्यः कुरुपितामहात् ।
द्रोणवैकर्तनाभ्यां वा रथः संयातुमर्हति ॥ २२
ततो भीष्मो महाराज कौरवाणां पितामहः ।
अर्जुनं सप्तसप्तत्या नाराचानां समावृणोत् ॥ २३
द्रोणश्च पञ्चविंशत्या कृपः पञ्चाशता शरैः ।
दुर्योधनश्चतुःषष्ट्या शल्यश्च नवभिः शरैः ॥ २४
सैन्धवो नवभिश्चापि शकुनिश्चापि पञ्चभिः ।
विकर्णो दशभिर्भल्लै राजन्विव्याध पाण्डवम् ॥ २५
स तैर्विद्धो महेष्वासः समन्तान्निशितैः शरैः ।
न विव्यथे महाबाहुर्भिद्यमान इवाचलः ॥ २६
स भीष्मं पञ्चविंशत्या कृपं च नवभिः शरैः ।
द्रोणं षष्ट्या नरव्याघ्रो विकर्णं च त्रिभिः शरैः ॥ २७
आर्तायनिं त्रिभिर्बाणै राजानं चापि पञ्चभिः ।
प्रत्यविध्यदमेयात्मा किरीटी भरतर्षभ ॥ २८
तं सात्यकिर्विराटश्च धृष्टद्युम्नश्च पार्षतः ।
द्रौपदेयाभिमन्युश्च परिवव्रुर्धनंजयम् ॥ २९
ततो द्रोणं महेष्वासं गाङ्गेयस्य प्रिये रतम् ।
अभ्यवर्षत पाञ्चाल्यः संयुक्तः सह सोमकैः ॥ ३०
भीष्मस्तु रथिनां श्रेष्ठस्तूर्णं विव्याध पाण्डवम् ।

---

यंतं; $T_2$ M तापयंतं. $Ś_1$ सायकान्; $G_3$ संगरैः.

21 $D_8$ T G om. $21^{ab}$. — $^{b}$) $K_1$ प्रशिसैवेरकेकयैः; $K_3$ $B_3$ Da Dn $D_{1-5.7}$ प्राच्यसौवीरकैकयैः; $K_5$ $D_6$ प्राप्य सौवीरकैर्हयः ( $K_5$ °यैः ); M प्राच्य( $M_5$ °प्य )-केकयसाल्व( $M_4$ °सैनि )कैः. — $^{c}$) $K_1$ प्रतिदेयाय; $D_1$ प्रत्युदीयात्स; $D_3$ तु प्रतीयाय; $T_2$ संप्रतीयायाद्; $G_1$ $M_{1.3-5}$ संप्रतीयाय; Cc प्रत्युदीयाय ( as in text ). $Ś_1$ प्रत्युदियाय दीयाय ( sic ).

22 $^{a}$) $K_5$ $D_{2.6}$ गांजीव°. — $^{c}$) $K_{0-2}$ हि ( for वा ). — $^{d}$) $K_3$ $D_{2.6}$ रथं; $K_4$ B Da Dn $D_{4.5.7.8}$ S रथी; $D_1$ पार्थं ( for रथः ).

23 $^{b}$) $D_1$ सर्वलोकपितामहः; $D_3$ S सर्वलोक( $D_3$ °के )महारथः.. — $^{c}$) $T_2$ सप्तसप्तानां. — $^{d}$) $B_{1.2.4}$ Da $Dn_2$ $D_{4.5.7.8}$ समार्पयत्; $B_3$ $Dn_1$ S समर्पयत्; $D_3$ समाचिनोत् ( for समावृणोत् ). $D_1$ कृपणं पंचाशता शरैः.

24 $^{a}$) $B_4$ सप्त° ( for पञ्च° ). — $^{b}$) $K_{0-3}$ $B_3$ $D_4$ पंचशता; $D_2$ पंचाशतान्. $Ś_1$ परैः ( for शरैः ). S कृपः शारद्वतस्त्रिभिः. — $B_3$ $Dn_2$ $D_{4.7.8}$ ins. after 24 : $B_2$, after $25^{ab}$ :

160* द्रौणिः षष्ट्या नरव्याघ्रो विकर्णश्च त्रिभिः शरैः ।

25 $M_2$ om. ( hapl. ) $25^{a}$–$27^{b}$. $Dn_2$ $D_{4.7.8}$ om. $25^{ab}$. — $^{a}$) $K_4$ $B_{3.4}$ $D_{1.8}$ चैव ( for चापि ). $D_1$ शकुनिश्चैव. — After $25^{ab}$, $B_2$ ins. 160*. — $^{b}$) $G_2$ om. ( hapl. ) $25^{c}$–$28^{b}$. $K_2$ reads $25^{c}$–$26^{b}$ on marg. — $^{c}$) $K_3$ $D_{1.2.6}$ $T_1$ $G_4$ $M_{1.3.4}$ नवभिर् ( for दशभिर् ). $Ś_1$ बल्लैः; $K_1$ बाणै ( for भल्लैः ). $B_2$ $D_2$ $D_{4.7.8}$ आर्तायनिस्त्रिभिर्भल्लै ( cf. v. l. $28^{a}$ ).

26 $G_2$ $M_2$ om. 26 ( cf. v. l. 25 ). — $^{a}$) $D_1$ S ( $G_2$ $M_2$ om. ) तैर्विद्धः स महेष्वासैः ( $D_1$ °सः ). — $K_2$ om. ( hapl. ) $26^{c}$–$27^{d}$. — $^{c}$) $Ś_1$ $K_{0.1.3-5}$ $D_{2.6}$ न स विव्यथते ( $K_5$ °तां ) पार्थो.

27 $K_2$ $G_2$ om. 27 ( cf. v. l. 26, 25 ); $M_2$ om. $27^{ab}$ ( cf. v. l. 25 ). — $^{b}$) S ( $G_2$ $M_2$ om. ) दशभिः ( for नवभिः ). $B_2$ कृपं पंचाशता शरैः ( cf. $24^{b}$ ). — $^{c}$) $K_{0.1}$ M नरव्याघ्रं; T G ( $G_2$ om. ) °व्याघ्र. — $^{d}$) $D_1$ नवभिः ( for च त्रिभिः ). — After 27, $D_2$ ins.:

161* शल्यं च दशभिर्बाणैस्तावद्भिश्च जयद्रथम् ।

28 $G_2$ om. $28^{ab}$ ( cf. v. l. 25 ). — $^{a}$) $K_{0.2}$ आर्तायणं; $K_{1.4}$ $B_{1.2}$ $D_8$ Ca आर्तायनं; $K_3$ $D_{2.3}$ आर्तायिनं; $B_{3.4}$ शल्यं चैव; $T_2$ $G_3$ आर्तायनीं; $M_1$ °यनस्. Cv आर्तायनिस्त्रिभिर्भल्लैः ( cf. v. l. $25^{c}$ ). — $^{b}$) $B_2$ चाभि-; $D_3$ $G_3$ चैव ( for चापि ). $K_3$ पंक्तिभिः. — $^{c}$) $K_{0-2}$ प्रति° ( for प्रत्य° ). — $^{d}$) $D_1$ S पांडवो युद्धदुर्मदः.

29 $^{a}$) $T_2$ तत् ( for तं ). $K_1$ सातिकिर्; $G_3$ सात्वकिर्. $K_{0-2}$ तु ( for च ). — $^{b}$) $K_0$ पार्श्वतः. — $^{c}$) S सौभद्रो द्रौपदेयाश्च ( = 6. 23. $6^{c}$ ).

30 $^{a}$) $K_1$ तथा ( for ततो ). $K_{0.1}$ महेष्वासो. — $^{b}$) $K_1$ गंगे°. $K_2$ प्रियं तरं; $D_1$ प्रियैषिणं; S प्रिये स्थितं. — $^{c}$) $K_1$ अभिवर्षंत; $K_4$ B Da Dn $D_{4.5.7.8}$ $T_1$ $G_{3.4}$ अभ्यवर्तंत. $T_2$ अभ्यवर्तंत पांचाल्याः. — $^{d}$)

अशीत्या निशितैर्बाणैस्ततोऽक्रोशन्त तावकाः ॥ ३१
तेषां तु निनदं श्रुत्वा प्रहृष्टानां प्रहृष्टवत् ।
प्रविवेश ततो मध्यं रथसिंहः प्रतापवान् ॥ ३२
तेषां तु रथसिंहानां मध्यं प्राप्य धनंजयः ।
चिक्रीड धनुषा राजँल्लक्ष्यं कृत्वा महारथान् ॥ ३३
ततो दुर्योधनो राजा भीष्ममाह जनेश्वरः ।
पीड्यमानं स्वकं सैन्यं दृष्ट्वा पार्थेन संयुगे ॥ ३४
एष पाण्डुसुतस्तात कृष्णेन सहितो बली ।
यततां सर्वसैन्यानां मूलं नः परिकृन्तति ।
त्वयि जीवति गाङ्गेये द्रोणे च रथिनां वरे ॥ ३५
त्वत्कृते ह्येष कर्णोऽपि न्यस्तशस्त्रो महारथः ।
न युध्यति रणे पार्थं हितकामः सदा मम ॥ ३६
स तथा कुरु गाङ्गेय यथा हन्येत फल्गुनः ।
एवमुक्तस्ततो राजन्पिता देवव्रतस्तव ।
धिक्क्षत्रधर्ममित्युक्त्वा ययौ पार्थरथं प्रति ॥ ३७
उभौ श्वेतहयौ राजन्संसक्तौ दृश्य पार्थिवाः ।
सिंहनादान्भृशं चक्रुः शङ्खशब्दांश्च भारत ॥ ३८
द्रौणिर्दुर्योधनश्चैव विकर्णश्च तवात्मजः । C. 6. 2160 B. 6. 52. 40 K. 6. 52. 40

---

D5 G3 स युक्तः. K3 D2.6 सर्वसोमकैः; T1 G1.3.4 सायकोत्तमैः; M1.2 सोमकैः सह (by transp.).

31 [a]) B2 भीष्मश्च. — [b]) K3 तुल्यं; D1.3 S राजन् (for तूर्णं). — [c]) K1 अशेत्या; Da1 D5 आशीत्या; D3 अशीत्यां. K1 Da1 निशतैर्; D1 नवभिर्. — [d]) Ś1 ततोतुष्यतु (sic); K0 ततोतुष्यंत; K1 ततोतुषंतु; K2 ततोमुष्यत; K4 उदक्रोशंत; B1 Da Dn1 D5 G1 ततः क्रोशंति; T1 G2.4 M5 ततः क्रोशंत; M2 तत्राक्रोशंत. S (M1.3 *inf. lin.* as in text) पांडवाः (for तावकाः).

32 [a]) Da1 तु; S च (for तु). D3 तेषां निनादं श्रुत्वा तु. — [b]) K4 B D1.3 सहितानां (for प्रहृष्टानां). D1 प्रहृष्टवान्; T1 G4 M3.5 प्रहर्षतः; G1-3 प्रधर्षितः; M1.2.4 प्रहर्षितः. — [c]) D1 मध्ये. — [d]) K4 B D3 नर-; K5 रहः (for रथ-).

33 [a]) D1.3 S तेषां महारथानां च (D3 °नां स). — [c]) K2 Da1 विक्रीड. D1 चिक्रीडत महाराज; D2 चिक्रीडे धनुषो राजन्. — [d]) Ś1 K0.3.4 B1.2.4 Da1 D1-3.7.8 M4 लक्षं कृत्वा; B3 लक्षीकृत्य; T1 G1 M1-3.5 लक्षान्कृत्वा; T2 वृक्षान्कृत्वा; G2-4 लक्ष्यान्कृत्वा. Cd cite लक्ष्यं (as in text). — After 33, S ins.:

162* क्षत्रियाणां शिरांस्युग्रैः कृन्तञ्शस्त्रैर्महारथः ।
शून्यान्कृत्वा रथोपस्थान्व्यचरत्फल्गुनस्तदा ।

34 [a]) D1 दुर्योधनस्ततो राजन्. — [b]) B3 जनेश्वरं; Da2 Dn1 D5 G1.3 °श्वर; Dn2 नरेश्वरः. — [c]) Da पीड्यमानां; Dn1 पीडमानं. K3 D2.6 स्वसैन्यं च; K4 मृशं सैन्यं; Da D5 स्वकां सेनां.

35 [c]) K4 B Da Dn D4.5.7.8 पा(K4 घा)तयन्त्सर्वसैन्यानि. — [d]) K2 D1 मूलतः. — [e]) K0-2.4 B D (except D7) T2 G1-3 M1.2.5 गांगेय.

36 [a]) M5 तत्कृते. K5 ह्येव; B D3 चैव; S चैष (for ह्येष). K3 कर्माणि; S (except T2) वै कर्णो (for कर्णोऽपि). — [b]) D6 त्यक्त° (for न्यस्त°). N विशां पते (for महारथः). — [c]) B1.2 Da D5 S युध्यते. B1.2.4 D (except D2.3.6) S पार्थान् (for पार्थं). — [d]) B3 कृत° (for हित°).

37 [a]) Ś1 तथा त्वं; D1.3 (marg. *sec. m.*) T2 त्वं तथा. — [b]) K0 फाल्गुणः; K1-5 B D फाल्गुनः; G3 फाल्गुनं. — [c]) S तदा (for ततो). — [e]) K1 D1 धिक्क्षत्रं; D3 धिक्क्षात्रं; D3 दिधिक्षु- (for धिक्क्षत्र-). D1 इदम् (for -धर्मम्). — [f]) N (except Ś1) प्रायात् (for ययौ).

38 [b]) K0-2 संस्थितौ; K5 B2 संपृक्तौ. Ś1 K B1 D2.3.6 प्रेक्ष्य; D1 वीक्ष्य (for दृश्य). S संस(M2 °य)क्तौ दृढधन्विनौ. — [c]) K1.2 B D (except D1.2.6) S सिंहनादं (for °नादान्). S कृत्वा (for चक्रुः). — [d]) K1 शंखशब्दं च; K3 D6 °नादांश्च. K5 मारिष (for भारत). B Da Dn D1.3-5.7.8 शंखान्दध्मुश्च मारिष; S बाणशंखरवैः सह.

39 K5 D5 om. (hapl.) 39. — [a]) K1 द्रोणिर्; K2 D3 M2 द्रौणि-; K3 D2.6 द्रोणो; Da1 द्रोण-; G2 द्रौणी-; G3 द्रौणिं. K3 D2.6 चापि (for चैव). — [b]) S महारथः (for तवात्मजः). — [d]) B1 D3 भारत (for मारिष). S अभ्यरक्षन्पितामहं.

C. 6. 2161
B. 6. 52. 41
K. 6. 52. 40

परिवार्य रणे भीष्मं स्थिता युद्धाय मारिष ॥ ३९
तथैव पाण्डवाः सर्वे परिवार्य धनंजयम् ।
स्थिता युद्धाय महते ततो युद्धमवर्तत ॥ ४०
गाङ्गेयस्तु रणे पार्थमानर्छन्नवभिः शरैः ।
तमर्जुनः प्रत्यविध्यद्दशभिर्मर्मवेधिभिः ॥ ४१
ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः ।
अर्जुनः समरश्लाघी भीष्मस्यावारयद्दिशः ॥ ४२
शरजालं ततस्तत्तु शरजालेन कौरव ।
वारयामास पार्थस्य भीष्मः शांतनवस्तथा ॥ ४३
उभौ परमसंहृष्टावुभौ युद्धाभिनन्दिनौ ।
निर्विशेषमयुध्येतां कृतप्रतिकृतैषिणौ ॥ ४४
भीष्मचापविमुक्तानि शरजालानि संघशः ।
शीर्यमाणान्यदृश्यन्त भिन्नान्यर्जुनसायकैः ॥ ४५
तथैवार्जुनमुक्तानि शरजालानि भागशः ।
गाङ्गेयशरनुन्नानि न्यपतन्त महीतले ॥ ४६
अर्जुनः पञ्चविंशत्या भीष्ममार्छच्छितैः शरैः ।
भीष्मोऽपि समरे पार्थं विव्याध त्रिंशता शरैः ॥ ४७
अन्योन्यस्य हयान्विद्ध्वा ध्वजौ च सुमहाबलौ ।
रथेषां रथचक्रे च चिक्रीडतुररिंदमौ ॥ ४८
ततः क्रुद्धो महाराज भीष्मः प्रहरतां वरः ।

---

40 $^{c}$) $D_3$ सहितास् ( for महते ). — $^{d}$) $G_2$ तयोर् ( for ततो ).

41 $^{a}$) $D_1$ ततः ( for रणे ). — $^{b}$) $K_{1.2.5}$ $D_{5.8}$ आनर्छ; $D_8$ विव्याध; $G_3$ आनर्च ( for आनर्छन् ). Ś$_1$ $K_{0-2.5}$ बहुभिः; $G_2$ दशभिः ( for नवभिः ). — $^{c}$) $K_5$ प्रतिविध्य; $G_3$ प्रत्ययुध्यद्. — $^{d}$) $M_4$ नवभिर् ( for दश° ). Ś$_1$ मर्मछेदिभिः; $K_{0.5}$ °भेदिभिः.

42 $^{a}$) $Da_2$ $D_8$ ( *sup. lin.* as in text ) $G_2$ $M_2$ शत° ( for शर° ). — $^{b}$) Ś$_1$ संप्रमुक्तेन; $K_2$ $M_4$ स प्रयुक्तेन; $K_4$ $B_2$ $D_{2.3.7}$ सुप्रमुक्तेन; $T_2$ $G_2$ संप्रयुक्तेन. $K_3$ पांडव; $D_1$ मारिष; S भारत. — $^{c}$) S धनंजयो जयप्रेप्सुर्. — $^{d}$) Ś$_1$ $K_3$ $B_3$ $T_1$ °वारयन्. $G_{1.3}$ $M_{3.5}$ दिशं. $D_1$ भीष्मस्याभ्यधमद्रथं.

43 Ś$_1$ reads $43^{a}$–$68^{d}$ after 6. 49. $22^{ab}$, and *repeats* $48^{c}$–$70^{d}$ and colophon after 6. 49. 4. — $^{a}$) Ś$_1$ द्रोणो युधि; $K_3$ $D_6$ शरजालास्; $D_8$ °जालस्. Ś$_1$ शरैरन्यैः; $K_{0.2}$ $D_{1.7.8}$ T $G_{2.4}$ $M_{4.5}$ ततस्तं तु; $K_{3.5}$ Da $Dn_1$ $D_{2.5.6}$ ततस्तस्य ( $K_5$ °त्र ). — $^{b}$) $K_{0-2.4}$ कौरवः; $K_5$ Da पार्थिवः; B Dn $D_{4.5.7.8}$ पार्थिव; $D_{1.3}$ मारिष; S भारत. — $^{d}$) $K_{1.3}$ Da $D_5$ भीष्म-. Ś$_1$ $K_0$ ( *sup. lin.* ). 1. 2 B $Dn_2$ $D_{1-4.6-8}$ तदा; S युधि ( for तथा ).

44 For sequence in Ś$_1$, cf. v. l. 43. — $^{a}$) $K_1$ °संतुष्टाव्. — $^{b}$) Ś$_1$ $D_3$ °नंदनौ; $K_0$ युद्धाय नंदिनौ. — $^{c}$) $T_2$ °शेषं नियुध्येतां; $M_4$ °शेषेण युध्येतां. — $^{d}$) = 6. 43. $25^{d}$. $K_{0.2}$ $T_2$ $M_4$ °कृतैषिणौ; $D_6$ °कृतिक्षिणौ.

45 For sequence in Ś$_1$, cf. v. l. 43. $K_{0-2}$ om. 45. — $^{a}$) $Dn_2$ $D_8$ °प्रयुक्तानि; $D_{4.7}$ °प्रमुक्तानि. — $^{b}$) $T_2$ °जातानि. Ś$_1$ $K_5$ $D_8$ सर्वशः; $Dn_2$ $D_3$ $G$ भागशः; $D_1$ मारिष ( for संघशः ). — $^{c}$) $G_2$ शीघ्रं; $M_4$ कीर्य° ( for शीर्य° ). $K_3$ शीर्यमाणा व्यदृश्यंत. — $^{d}$) Ś$_1$ $K_{3-5}$ $Da_2$ $Dn_1$ $D_{1-3.5.6}$ छिन्नानि ( for भिन्नानि ).

46 For sequence in Ś$_1$, cf. v. l. 43. — $K_0$ पार्थचापविनिमुक्तानि ( hypermetric ); $K_1$ पार्थचापविमुक्तानि; $K_2$ पार्थचापविनिर्मुक्ता; $D_1$ तथैव शरजालानि. — $^{b}$) $D_1$ पार्थमुक्तानि; $T_2$ शरजातानि. $K_3$ $Dn_2$ $D_{2.4}$ सर्वशः; $D_3$ संघशः; $D_8$ भारत. — $^{c}$) $K_3$ $D_{2.6}$ °शरकृत्तानि; $D_3$ °शरमुक्तानि; $T_2$ °शरजातानि. — $^{d}$) $K_3$ व्यपतंत; $B_{1.3.4}$ प्रापतंत; $M_{1-3.5}$ न्यविशंत. $D_3$ महीपते.

47 For sequence in Ś$_1$, cf. v. l. 43. — $^{b}$) $D_3$ आर्छच्छतैः. $K_5$ भीष्ममानर्छ छतैः शरैः ( hypermetric ). — $D_4$ om. ( hapl. ) $47^{cd}$. — $^{c}$) $K_{0-3}$ पार्थ. — $^{d}$) $K_{0.2}$ त्रिंशतः; $K_1$ त्रिंशतैः; $K_4$ B Da Dn $D_{5.1.5}$ नवभिः; $D_{1.3}$ S निशितैः ( for त्रिंशता ).

48 For sequence in Ś$_1$, cf. v. l. 43. — $^{a}$) B $Da_2$ $Dn_2$ $D_{4.5.7.8}$ अन्योन्यं तौ ( $D_8$ ते ). $M_4$ शरैर् ( for हयान् ). — $^{b}$) $D_6$ ध्वजं. $D_8$ समहाबलौ; $T_1$ सुमहद्युधि; M सुमहाद्युती. $T_1$ G ध्वजौ चापि महाद्युती. — $K_5$ om. $48^{cd}$. — $^{c}$) $D_1$ रथैषां. Ś$_1$ $K_3$ $D_{1.2.5}$ चक्ररक्षौ; $K_0$ रथचक्रौ; $K_1$ रथशक्रौ; $K_2$ $B_{3.4}$ $Dn_3$ $D_{4.7.8}$ रथचक्रं. $K_3$ Da $Dn_1$ $D_{2.5}$ तु ( for च ). $T_1$ G रथेषां रथचक्रेण. — $^{d}$) In $K_4$, the text from तु up to भि- in $49^{c}$, is lost on a damaged fol. $T_1$ G M चित्रं चि( $G_{1.3}$ चा )क्रीडितु रणे; $T_2$ विच्छेदुरौ तदा रणे.

वासुदेवं त्रिभिर्बाणैराजघान स्तनान्तरे ॥ ४९
भीष्मचापच्युतैर्बाणैर्निर्विद्धो मधुसूदनः ।
विरराज रणे राजन्सपुष्प इव किंशुकः ॥ ५०
ततोऽर्जुनो भृशं क्रुद्धो निर्विद्धं प्रेक्ष्य माधवम् ।
गाङ्गेयसारथिं संख्ये निर्बिभेद त्रिभिः शरैः ॥ ५१
यतमानौ तु तौ वीरावन्योन्यस्य वधं प्रति ।
नाशक्नुतां तदान्योन्यमभिसंधातुमाहवे ॥ ५२
मण्डलानि विचित्राणि गतप्रत्यागतानि च ।
अदर्शयेतां बहुधा सूतसामर्थ्यलाघवात् ॥ ५३
अन्तरं च प्रहारेषु तर्कयन्तौ महारथौ ।
राजन्नन्तरमार्गस्थौ स्थितावास्तां मुहुर्मुहुः ॥ ५४
उभौ सिंहरवोन्मिश्रं शङ्खशब्दं प्रचक्रतुः ।
तथैव चापनिर्घोषं चक्रतुस्तौ महारथौ ॥ ५५
तयोः शङ्खप्रणादेन रथनेमिस्वनेन च ।
दारिता सहसा भूमिश्चकम्प च ननाद च ॥ ५६
न तयोरन्तरं कश्चिद्ददृशे भरतर्षभ ।

C. 6. 2178
B. 6. 52. 58
K. 6. 52. 58

---

49 For sequence in Ś1, cf. v. l. 43. — $^{a}$) G3 °तेजा (for °राज). — K1 om. (? hapl.) $49^{b}$–$50^{c}$. — $^{b}$) S भीष्मः शांतनवः शरैः. — $^{c}$) S ततस्तीक्ष्णैर् (for त्रिभिर्बाणैर्). — D6 om. (hapl.) $49^{d}$–$50^{a}$.

50 For sequence in Ś1, cf. v. l. 43. K1 om. $50^{abc}$; D6 om. $50^{a}$ (cf. v. l. 49). — $^{a}$) K4.5 B D (except D2; D6 om.) °च्युतैस्तैस्तु. — $^{c}$) K3 D2.6 तदा राजन्; D1 महाराज (for रणे राजन्). — $^{d}$) Ś1 Ko.2 D3 T2 G1 M4 सुपुष्प. D1 पुष्पितः किंशुको यथा.

51 For sequence in Ś1, cf. v. l. 43. — $^{b}$) Ko–2 M4 निविद्धं. S (except M1) वीक्ष्य. K3 D2.6 विद्धं प्रेक्ष्य जनार्दनं. — $^{c}$) Ko गांगेयं. D6 चक्रे (for संख्ये). D1.8 S सारथिं कुरुवृद्ध( T1 G2.4 °वीर )स्य. — $^{d}$) Dn2 D3.8 T1 G शितैः (for त्रिभिः).

52 For sequence in Ś1, cf. v. l. 43. — $^{a}$) In K4 the portion of the text from नौ to सू in $53^{d}$ is lost on a damaged fol. — $^{b}$) K3.5 B Da Dn D2.4–6.8 T2 G1–3 M रथं (for वधं). D1 अन्योन्यवरदंशितौ. — $^{c}$) D1 नो शकेतां. K3 D2.6 ततो (for तदा). S न तौ शेकतुरन्योन्यम्. — $^{d}$) D3 अभिसंधानम्; S (except G4) अतिसंधातुम्; Cc अभि° (as in text).

53 For sequence in Ś1, cf. v. l. 43. K4 damaged up to सू in $53^{d}$ (cf. v. l. 52). — $^{a}$) B3.4 S तौ मंडलानि चित्राणि. — $^{b}$) K2 मत° (for गत°). — $^{c}$) K1 अधर्ष°; K5 आर्दयेतां तु; D1 आदर्शयेतां; T1 G M व्यदर्श°. B Da Dn D4.5.7.8 दर्शयामासतू राजन्; T2 दर्शयेतां बहुविधं. — $^{d}$) K1.3 D2.6 सूतसामर्थ्यलाघवं; S °सामर्थ्य( G3 °सारथ्य )जं बलं; Cc. d as in text.

54 For sequence in Ś1, cf. v. l. 43. — $^{a}$) D3 अंतरंतः; D6 अंतरं तु; T2 अनंतं च. Ca. c. d cite अंतरं. T1 G4 प्रहारेस्मिन्. — $^{b}$) K1.2 Da1 तर्कयंतो; T1 G °येतां; Ca. c. d °यन्तौ (as in text). K3 D2.6 महाबलौ; K4 B Da Dn D4.5.7.8 विशां पते; D1.3 S परस्परं (for महारथौ). — After $54^{ab}$, (through eye-wandering) K2 reads 56. — $^{c}$) Ko.1.3.5 Da1 D2.6 उत्तम°; Da2 D5 उत्तर°; D3 तौ वन°; G1–3 आंतर°; Ca. c अन्तर° (as in text).

55 For sequence in Ś1, cf. v. l. 43. — $^{a}$) K1 Da1 T2 सिंहरवौ मिश्रं; B2 शंखरवोन्मिश्रं; D2 सिंहरथोन्मिश्रौ; D6 °रवान्मिश्रं; G2 °रवैर्मिश्रं. — $^{b}$) B Da Dn D4.5.7.8 च चक्रतुः; D6 प्रचक्रमुः.

56 For sequence in Ś1, cf. v. l. 43. K2 reads 56 after $54^{ab}$. — $^{a}$) K1 B2 °प्रनादेन; K4 B1.3.4 D3.7 S °निनादेन. D1 उभयोः शंखनादेन. — B2 om. (hapl.) $56^{cd}$. — $^{c}$) K4 धारिता; D1 नादिता (for दारिता). T1 G4 सहभूमिश्च (for सहसा भूमिश्च). — $^{d}$) All MSS. (except Ś1 K1 D3; B2 om.) चकंपे (for चकम्प). — After 56, S, om. $57^{ab}$, reads 60.

57 For sequence in Ś1, cf. v. l. 43. K4 damaged. S om. $57^{ab}$. — $^{a}$) B D1.3 M5 नोभयोर् (for न तयोर्). Ko.1 कैश्चिद्; D1 केचिद्. — $^{b}$) Ko दृश्यते; D1 ददृशुर्. — $^{c}$) S उभौ हि (for बलिनौ). Ś1 Ko–3 D2.6 स( Ko सु )दृशौ (for समरे). S वीरौ (for शूरौ). D1 तरस्विनौ युधि दुर्धर्षौ (hypermetric); D3 बलिनौ युद्धदुर्धर्षौ. — $^{d}$) B3 D3

C. 6. 2179
B. 6. 52. 59
K. 6. 52. 56

बलिनौ समरे शूरावन्योन्यसदृशावुभौ ॥ ५७
चिह्नमात्रेण भीष्मं तु प्रजज्ञुस्तत्र कौरवाः ।
तथा पाण्डुसुताः पार्थं चिह्नमात्रेण जज्ञिरे ॥ ५८
तयोर्नृवरयो राजन्दृश्य तादृक्पराक्रमम् ।
विस्मयं सर्वभूतानि जग्मुर्भारत संयुगे ॥ ५९
न तयोर्विवरं कश्चिद्रणे पश्यति भारत ।
धर्मे स्थितस्य हि यथा न कश्चिद्वृजिनं क्वचित् ॥ ६०
उभौ हि शरजालेन तावदृश्यौ बभूवतुः ।
प्रकाशौ च पुनस्तूर्णं बभूवतुरुभौ रणे ॥ ६१

तत्र देवाः सगन्धर्वाश्चारणाश्च सहर्षिभिः ।
अन्योन्यं प्रत्यभाषन्त तयोर्दृष्ट्वा पराक्रमम् ॥ ६२
न शक्यौ युधि संरब्धौ जेतुमेतौ महारथौ ।
सदेवासुरगन्धर्वैर्लोकैरपि कथंचन ॥ ६३
आश्चर्यभूतं लोकेषु युद्धमेतन्महाद्भुतम् ।
नैतादृशानि युद्धानि भविष्यन्ति कथंचन ॥ ६४
नापि शक्यो रणे जेतुं भीष्मः पार्थेन धीमता ।
सधनुश्च रथस्थश्च प्रवपन्सायकान्रणे ॥ ६५
तथैव पाण्डवं युद्धे देवैरपि दुरासदम् ।

---

अन्योन्यं. K5 अन्योन्यविजयैषिणौ.

58 For sequence in Ś1, cf. v. l. 43. — a) K5 भीष्मं ते; B1. 2. 4 Da Dn1 D4–8 भीष्मं च; Dn2 भीष्मस्य. — b) K0 प्रजज्ञुस्; K2 Da1 प्रजजुस्; K5 D6 S Cd जज्ञिरे; Da2 प्रजहुस्; D4. 8 प्रययुस्; Cv प्रजज्ञुस् (as in text). — c) K0. 2 ततः. K1 G1. 3 पार्थसुताः; T2 M1 पांडुसुतं. — d) K3 D2. 6 चिह्नमादाय. K5 जज्ञिरे.

59 For sequence in Ś1, cf. v. l. 43. — a) K3 D2 ततो (for तयोर्). S नृ(M2 तु)सिंहयो. K5 दृष्ट्वा (for राजन्). — b) K3. 4 B D दृष्ट्वा (for दृश्य). K5 तादृशं तं पराक्रमं; T1 G युद्धं दृष्ट्वातिविक्रमं; T2 M युधि (T2 °द्धे) दृष्ट्वा पराक्रमं. — K3 D2. 6 om. (hapl.) 59c–62d. — cd) K0–2 विस्मयं परमं जग्मुः सर्वभूतानि संयुगे.

60 For sequence in Ś1, cf. v. l. 43. K3. 5 D2. 6 om. 60 (for K3 D2. 6, cf. v. l. 59). S reads 60 after 56. — a) T2 रथयोर् (for न तयोर्). D (except D1. 3; D2. 6 om.) S अंतरं (for विवरं). G2 किंचिद्. — b) Ś1 K0–2 D3 [ऽ]पश्यत (for पश्यति). — c) K0. 1 D3 धर्मस्थितस्य; S धर्माश्रितस्य. T1 G2. 4 तथा (for यथा). — d) T1 G1. 2. 4 किंचिद् (for कश्चिद्).

61 For sequence in Ś1, cf. v. l. 43. K3 D2. 6 om. 61 (cf. v. l. 59). — a) K5 B2 उभौ तु; B3 D1. 3 उभौ च; S अन्योन्य- (T1 G1. 3. 4 न्यं). B1 शरवर्षेण (for °जालेन). — c) K4. 5 B3. 4 D (except D1. 3; D2. 6 om.) तु (for च). K4 Dn2 ततस् (for पुनस्). S प्रकाश(M4 °शे)तां पुनर्यातौ. — d) D1 बभूवतुररिंदमौ; S क्षणेन भरतर्षभौ (M2–5 °भ).

62 For sequence in Ś1, cf. v. l. 43. K3 D2. 6 om. 62 (cf. v. l. 59). — a) B D1 ततो (for तत्र). — D3 om. (hapl.) from गंधर्वा up to सदेवासुर in 63c. — b) Ś1 K4 B2–4 Da Dn D4. 5 मह° (for सह°). D1 सिद्धाश्च ऋषिभिः सह; D3 चारणाश्चर्षिभिः सह; D7 °णाः समहर्षिभिः. — c) K0–3 प्रति; M1 प्राप्य (for प्रत्य-).

63 For sequence in Ś1, cf. v. l. 43. D3 om. up to सदेवासुर in 63c (cf. v. l. 62). — a) K5 अशक्यौ; D6 न शक्यो युधि संरब्धो. — b) K3 D2. 6 महाबलौ; D1. 3 S कथंचन (for महारथौ). — c) T G M1: सदैत्या(M2 °नागा)सुर°. — d) D1. 3 महारथौ (for कथंचन). D6 लोके परि कथंचन; S देवै(G1 लोकै)रपि सवासवैः.

64 Ś1 om. (hapl.) 64. — a) K3 D2. 6 S लोकेस्मिन् (for लोकेषु). — c) B D (except D1–3. 5) नैव चैतादृशं युद्धं. — d) K4. 5 B D (except D1–3. 5) भविष्य(K4. 5 °ष्यं)ति कदाचन; S भूतपूर्वाणि संयुगे.

65 For sequence in Ś1, cf. v. l. 43. — a) B D1 Da Dn1 D3. 5 S न हि; Dn2 D4. 7. 8 नैव; तु (for नापि). K3. 5 D2. 6 S transp. जेतुं and भीष्मः. K4 भीष्मं जेतुं (for जेतुं भीष्मः). — c) K3–5 B सधनुः स (for सधनुश्च). D3 रथस्तस्य. D3. 5 Da Dn D2. 4–8 सधनुः सरथः साश्वः (K3. 5 °रथश्चैव; B2 °शराः साश्वः). — d) Da Dn1 D5 प्रव(Da1 °ह)र्षन्; D1 प्रकर्षन्. Da Dn1 D5 बहून् (for रणे). S विसृजंश्चापि सायकान्.

न विजेतुं रणे भीष्म उत्सहेत धनुर्धरम् ॥ ६६
इति स्म वाचः श्रूयन्ते प्रोच्चरन्त्यस्ततस्ततः ।
गाङ्गेयार्जुनयोः संख्ये स्तवयुक्ता विशां पते ॥ ६७
त्वदीयास्तु ततो योधाः पाण्डवेयाश्च भारत ।
अन्योन्यं समरे जघ्नुस्तयोस्तत्र पराक्रमे ॥ ६८
शितधारैस्तथा खड्गैर्विमलैश्च परश्वधैः ।
शरैरन्यैश्च बहुभिः शस्त्रैर्नानाविधैर्युधि ।
उभयोः सेनयोर्वीरा न्यकृन्तन्त परस्परम् ॥ ६९
वर्तमाने तथा घोरे तस्मिन्युद्धे सुदारुणे ।
द्रोणपाञ्चाल्ययो राजन्महानासीत्समागमः ॥ ७०

इति श्रीमहाभारते भीष्मपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## ४९

धृतराष्ट्र उवाच ।
कथं द्रोणो महेष्वासः पाञ्चाल्यश्चापि पार्षतः ।
रणे समीयतुर्यत्तौ तन्ममाचक्ष्व संजय ॥ १
दिष्टमेव परं मन्ये पौरुषादपि संजय ।

C. 6. 2195
B. 6. 53. 2
K. 6. 53. 2

66 For sequence in Ś1, cf. v. l. 43. — a) K3 D6 पांडवान्. — b) K3 D2.6 सुदुर्जयं (for दुरासदम्). Ś1 K0-2 नातरद्ध (K0 °द्धा) रतौजसा. — c) S हि (for वि-). K5 D6 भीष्मम्. — d) K0 धनुर्वरं; D3 धनुर्युतं. K5 उत्सहंते धनुर्धरः. — After 66, N ins.:

163* आलोकादपि युद्धं तु सममेतद्भविष्यति ।
[ K3-5 B D हि (for तु). ]

67 For sequence in Ś1, cf. v. l. 43. — a) K4 G2 वाचोश्रूयंत. — b) K1 प्रोचरंति; K5 °रंतस; B3.4 Da Dn D4.5.7.8 प्रचरंत्यस्; D1 प्रस्फुरंत्यस् (for प्रोच्चरन्त्यस्). K3 D2.6 प्रोच्यमानाः पुनः पुनः. — c) D1 मध्ये (for संख्ये). — d) K0-2 हेतुयुक्ता; D1 तथा युधि (for स्तव°). S स्व(T2 M1.3-5 त)त्कृते भरतर्षभ.

68 For sequence in Ś1, cf. v. l. 43. — a) K0-3 D1.2.6 च (for तु). D3 तदा (for ततो). S ततस्त्वदीया योधाश्च. — b) D1 तु (for च). — c) D1 अन्योन्यस्य शराञ्जघ्नुस्; T2 °न्यं च समाजघ्नुस्. — d) B2 S समागमे (for पराक्रमे).

69 a) K5 D2 शत°. Ś1 °रैरथाखड्गैर्. — b) K5 निशितैस्तु (for विमलैश्च). K2.3.5 Da Dn1 D1-3.5.6 परस्वधैः. — D1 om. 69cdef; S (except M1.2) om. 69cd. — e) Ś1 शरजालं शरैरन्यैः. — e) K4.5 B D (except D2.3.6; D1 om.) S शूरा (for वीरा). — f) Ś1 न्यकृतंत; K1 व्यकृतंत; K3.5 Da1 D1.6.8 M3 न्यकृंतत (for न्यकृन्तन्त).

70 a) Ś1 K0-2 तदा; K3 D6 ततो (for तथा). D1 °माने ततस्तस्मिन्. — b) D1 रणे चैव सुदारुणे; S तस्मिन्वीरवरक्षये. — c) K0.5 D7 S (mostly) °पांचाल्योः; K1 °पंचाल्ययो. — d) T1 G घोर आसीत्समा°.

Colophon *repeated* in Ś1. — *Sub-parvan:* Omitting sub-parvan name, Ś1 (only once) K0-2 mention only द्वितीययुद्धदिवस; likewise, K5 T2 द्वितीयदिवस; D6 द्वितीयदिवसयुद्ध; M1 द्वितीयेह्नि; M2 द्वितीयेह्नि; M4 द्वितीयाह्निक. — *Adhy. name:* T2 G2 भीष्मार्जुनसमागमः. — *Adhy. no.* (figures, words or both): K5 D1 M3.4 49; Da2 10; Dn2 M5 50; D5 52; T G 47; M1.2 48 (as in text). — *Śloka no.:* Dn2 D5 72.

## 49

1 In K4, 1a-2b is lost on a damaged fol. — a) K5 कथं द्रोणं महेष्वासं. — b) K5 M1.3-5 पांचालश्च. B Da Dn D4.5.7.8 चैव (for चापि). K0 पार्श्वतः. D1 पांचाल्यश्च महाबलः. — c) Ś1 K0-3.5 D1-3.6 उभौ (for रणे). K0 यात्तौ; K1 Da1 यत्तो; G2 M5 युक्तौ. — d) B1-3 दारुणं (for संजय).

C. 6. 2195
B. 6. 53. 2
K. 6. 53. 2

यत्र शांतनवो भीष्मो नातरद्युधि पाण्डवम् ॥ २
भीष्मो हि समरे क्रुद्धो हन्याल्लोकांश्चराचरान् ।
स कथं पाण्डवं युद्धे नातरत्संजयौजसा ॥ ३

संजय उवाच ।

शृणु राजन्स्थिरो भूत्वा युद्धमेतत्सुदारुणम् ।
न शक्यः पाण्डवो जेतुं देवैरपि सवासवैः ॥ ४
द्रोणस्तु निशितैर्बाणैर्धृष्टद्युम्नमयोधयत् ।
सारथिं चास्य भल्लेन रथनीडादपातयत् ॥ ५
तस्याथ चतुरो वाहांश्चतुर्भिः सायकोत्तमैः ।
पीडयामास संक्रुद्धो धृष्टद्युम्नस्य मारिष ॥ ६
धृष्टद्युम्नस्ततो द्रोणं नवत्या निशितैः शरैः ।
विव्याध प्रहसन्वीरस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ ७
ततः पुनरमेयात्मा भारद्वाजः प्रतापवान् ।
शरैः प्रच्छादयामास धृष्टद्युम्नममर्षणम् ॥ ८
आददे च शरं घोरं पार्षतस्य वधं प्रति ।
शक्राशनिसमस्पर्शं मृत्युदण्डमिवापरम् ॥ ९
हाहाकारो महानासीत्सर्वसैन्यस्य भारत ।
तमिषुं संधितं दृष्ट्वा भारद्वाजेन संयुगे ॥ १०
तत्राद्भुतमपश्याम धृष्टद्युम्नस्य पौरुषम् ।
यदेकः समरे वीरस्तस्थौ गिरिरिवाचलः ॥ ११
तं च दीप्तं शरं घोरमायान्तं मृत्युमात्मनः ।
चिच्छेद शरवृष्टिं च भारद्वाजे मुमोच ह ॥ १२

---

2 D2 om. (hapl.) $2^{ab}$. — $^{a}$) S दैवम्; Cc. d दिष्टम् (as in text). Da Dn1 D5 एतत्; M2 एवं (for एव). — $^{b}$) D1. 3. 7 पौरुषादिति (D7 °दपि) मे मतिः; S पौरुषं तु निरर्थकं. — $^{c}$) K2 D2 तत्र. — $^{d}$) K5 नाजयद्; B1. 2. 4 नाभवद्; S नाहनद्; Ca. c नातरद् (as in text).

3 $^{a}$) D8 M1 भीष्मोपि. — $^{c}$) M3 बांधवं (for पाण्डवं). D3 संख्ये (for युद्धे). — $^{d}$) K5 नाजयत्; B3 नाभवद्; T1 G4 नाहनत्; M4 नाहरत्. B Dn2 D4. 7. 8 युधि संजय (B1 पांडवं); S संजयात्र वै (for संजयौजसा).

4 $^{c}$) K4 damaged. B1–3 शक्याः. — $^{d}$) T1 G सेंद्रै(G3 देवै)रपि सुरासुरैः. — After 4, Ś1 *repeats* 6. 48. $48^{c}$–$70^{d}$ and colophon.

5 Before 5, Ś1 reads धृतराष्ट्र उवाच. — $^{a}$) Ś1 द्रोणः सु-; K0–2 D1 द्रोणश्च. B D (except D1–3. 6) विविधैर् (for निशितैर्). D1 भल्लैर् (for बाणैर्). — $^{b}$) K2 अचोदयत्; K4 B D (except D2. 6) अयुध्यत. — K3 om. (hapl.) $5^{cd}$. D2 writes $5^{cd}$ on marg. and cancels it. — $^{c}$) M1. 2 चापि (for चास्य). Ś1 बल्लेन; T1 G3 फल्लेन. — $^{d}$) = $26^{b}$. K4 damaged. Ca. d cite नीडात्. Ś1 K0–2 रथनीडादपाहरत्; D1. 8 S ध्वजं चैकेन विव्यधे.

6 $^{a}$) K4 damaged. Da Dn1 D3. 5 S (except T1) तथास्य (for तस्याथ). — $^{d}$) B3 D2 (*sup. lin.* as in text). 6 M3. 5 धृष्टद्युम्नश्च; D1 °द्युम्नं च. T1 G भारत (for मारिष).

7 $^{b}$) D8 नवभिर् (for नवत्या). K3 नवभिः (for निशितैः). — $^{c}$) G2. 3 विव्याथ (for °ध). Ś1 K0–2 प्रहरन्; K3 D6 विहसन्; Dn2 D4. 8 S समरे; D1 प्रसभं (for प्रहसन्).

8 $^{c}$) S संछाद°. — $^{d}$) K0. 2 महारथं (for अमर्षणम्).

9 $^{a}$) Ś1 K0–2 आदिदेश; D2 आददेथ; D3 S संदधे च (for आददे च). — $^{b}$) K3. 4 D2. 6. 8 रणे (for वधं). D1. 3 S पार्षतांत(T1 G4 °तांतं)चिकीर्षया. — $^{c}$) Ś1 K0–2 शक्राशनिसमं घोरं; M वज्राशनिसमस्पर्शं (M2 °र्शः). — $^{d}$) K4 damaged. D3 S कालं (for मृत्यु°). D3 इवांतकः (for इवापरम्).

10 $^{b}$) D3 सर्वसैन्येषु. D1 T G मारिष (for भारत). — $^{c}$) Ś1 मंत्रितं; K5 सज्जितं; D8 संधितुं; T G संहितं. Cc cites संधितं and तमिषुं. — $^{d}$) M2 भरं. S धीमता (for संयुगे).

11 $^{a}$) D2. 6 M3–5 अपश्यामो; M1. 2 अपश्यं वै. — $^{c}$) D3 तदेकः; T1 G2. 4 य एकः.

12 $^{a}$) K6 स च दीप्त-; D1 तं दीप्यंतं; S तं च दृष्ट्वा (T2 दृष्ट्वा). B Da2 Dn2 D1. 4. 5. 7. 8 S महाघोरं (for शरं घोरम्). — $^{b}$) K0–2 आयातं. K5 मन्यु

तत उच्चुकुशुः सर्वे पाञ्चालाः पाण्डवैः सह ।
धृष्टद्युम्नेन तत्कर्म कृतं दृष्ट्वा सुदुष्करम् ॥ १३
ततः शक्तिं महावेगां स्वर्णवैडूर्यभूषिताम् ।
द्रोणस्य निधनाकाङ्क्षी चिक्षेप स पराक्रमी ॥ १४
तामापतन्तीं सहसा शक्तिं कनकभूषणाम् ।
त्रिधा चिक्षेप समरे भारद्वाजो हसन्निव ॥ १५
शक्तिं विनिहतां दृष्ट्वा धृष्टद्युम्नः प्रतापवान् ।
ववर्ष शरवर्षाणि द्रोणं प्रति जनेश्वर ॥ १६
शरवर्षं ततस्तं तु संनिवार्य महायशाः ।
द्रोणो द्रुपदपुत्रस्य मध्ये चिच्छेद कार्मुकम् ॥ १७
स च्छिन्नधन्वा समरे गदां गुर्वीं महायशाः ।
द्रोणाय प्रेषयामास गिरिसारमयीं बली ॥ १८
सा गदा वेगवन्मुक्ता प्रायाद्द्रोणजिघांसया ।
तत्राद्भुतमपश्याम भारद्वाजस्य विक्रमम् ॥ १९
लाघवाद्व्यंसयामास गदां हेमविभूषिताम् ।
व्यंसयित्वा गदां तां च प्रेषयामास पार्षते ॥ २०
भल्लान्सुनिशितान्पीतान्स्वर्णपुङ्खाञ्शिलाशितान् ।
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे ॥ २१

C 6. 2214
B. 6. 53. 21
K 6. 53. 21

---

मात्मनः ; G3 मृत्युमाहवे. — c) D1 समरे क्रुद्धः ; T1 च शराभ्यां च ; T2 G (G1 damaged) शरवर्यं च ; M शरवर्षेण (for शरवृष्टिं च). — d) K2 भारद्वाजं. K1 D2.3 च (for ह). D1 शरवृष्टिं ससर्ज च ; S भारद्वाजस्य संयुगे.

13 a) Ś1 ततश्च चुक्रुशुः ; K0-3 D1.2.6 ततस्ते चुक्रुशुः. K0 सर्वाः ; B Da Dn D4.5.7.8 S हृष्टाः ; D6 शूराः (for सर्वे). — b) K1.3.4 B1.2 D2.3.8 पंचालाः. S सह पांडवैः (by transp.). — c) D1 धृष्टद्युम्नस्य.

14 a) K4 damaged. S अथ (T1 G4 रथ-) शक्तिं. — b) Ś1 K0-2 स्वर्ण(K0 °र्णं)वैडूर्यभूषणां ; K4 B D6 °वैडूर्यभूषि(B2 °शोभि)तां ; D1 तदा कार्ष्णायसीं दृढां ; S (except G1) रुक्मवैडूर्य°. — d) Ś1 K3 च ; D1 [आ]शु (for स). S चिक्षेप त्वरयान्वितः.

15 a) G2 संप्रेक्ष्य (for सहसा). — b) K4 S °भूषितां. — After $15^{ab}$, K1 *repeats* $14^{c}$–$15^{b}$. — c) Ś1 K0-2 B3 D1 द्विधा. K0 चिच्छेद (for चिक्षेप). D1 सहसा (for समरे). — d) D3 [ऽ]सहन्निव ; D6 पराक्रमी (for हसन्निव).

16 Dn1 om. $16^{a}$–$17^{b}$. — a) D1 निवारितां ; D3 विनिहितां ; S तां विहतां. — b) G3 भारद्वाजः (for धृष्टद्युम्नः). — c) K3 D2.6 शरवर्षेण (for °र्षाणि). — d) K0-2 D3 M3 जनेश्वरः.

17 Dn1 om. $17^{ab}$ (cf. v. l. 16). — a) K0.2 तु तत्तत्र ; K1.3 B3 Da Dn2 D2.4-8 ततस्तत्र ; K4 D1.3 ततस्तत्तु ; K5 च तं तस्य ; B1.2.4 ततस्तच्च ; S ततस्तूर्णं. — b) K0-2 स निवार्य. K3 D2.6 महौजसा ; T G महारथः. — D3 om. (hapl.) $17^{c}$–$18^{b}$. — d) Ś1 कार्पुकं ; G2 सायकं (for कार्मुकम्).

18 D3 om. $18^{ab}$ (cf. v. l. 17). — a) T2 G1.2 M1.3.4 सं- (for स). — b) K0.2.3 Da1 गदा गुर्वी. Ś1 K1 महायशः ; T1 G महारथः ; T2 M महाबलः. D1 गदामादाय वीर्यवान्. — d) D1 वज्र° ; S (except M2) अश्म° ; Cc गिरि° (as in text). K3 D2 बलात् ; K5 बलिः ; S दृढां (for बली).

19 a) B3.4 D (except D1-3.6) तस्करान् (for वेगवन्). — b) B3 Da Dn D4.5.7.8 (*sup. lin.*) प्रागाद्. — $19^{cd}$ = (var.) $32^{ab}$. — c) Ś1 K D2.6 तत्राश्चर्यम्. K3.5 D2.3 M3-5 अपश्यामो. — d) K0 भरद्वाजस्य. D3 लाघवं (for विक्रमम्). M2 विक्रमं पार्षदस्य च.

20 a) Ś1 शमयामास ; K0-2 D1.3.6 S (except M4) ध्वंस° ; K5 भ्रंश° ; Ca.c व्यंस° (as in text). — b) Ś1 K5 हेमविभूषणां ; D1 यद्धेमभूषितां ; S (except G1) तां हेमभूषितां. — c) Ś1 K0-2.5 D1.3.6 T G2-4 ध्वंस° (for व्यंस°). K0-2 D3 तां तु ; K4 B3.4 Da Dn D4.5.7.8 S चैव ; D1 सोपि (for तां च). — d) K5 पार्षतं ; B1 D3 भारत ; B2-4 Dn2 D4.7 मारिष ; Da1 D1 पार्षत.

21 a) G2 फल्लान्. K3 D2.6 पंच ; K5 दीप्तान् ; T2 भीतान् ; G2 पीनान् ; Ca पीतान् (as in text). — b) Ś1 सुवर्ण° (hypermetric) ; Dn1 D3 T G2.4 M रुक्मपुंखान् ; G1.3 कंकपत्रान्. K0-2 शिलाचितान् ; D3 S सुदारुणा(G1.3 °वेगिता)न्. — c) G1 ते त्वस्य ; G3 ते तत्र. — d) D8 पपौ.

C. 6. 2215
B 6. 53. 22
K. 6. 53. 22

अथान्यद्धनुरादाय धृष्टद्युम्नो महामनाः ।
द्रोणं युधि पराक्रम्य शरैर्विव्याध पञ्चभिः ॥ २२
रुधिराक्तौ ततस्तौ तु शुशुभाते नरर्षभौ ।
वसन्तसमये राजन्पुष्पिताविव किंशुकौ ॥ २३
अमर्षितस्ततो राजन्पराक्रम्य चमूमुखे ।
द्रोणो द्रुपदपुत्रस्य पुनश्चिच्छेद कार्मुकम् ॥ २४
अथैनं छिन्नधन्वानं शरैः संनतपर्वभिः ।
अवाकिरदमेयात्मा वृष्ट्या मेघ इवाचलम् ॥ २५
सारथिं चास्य भल्लेन रथनीडादपातयत् ।
अथास्य चतुरो वाहांश्चतुर्भिर्निशितैः शरैः ॥ २६
पातयामास समरे सिंहनादं ननाद च ।
ततोऽपरेण भल्लेन हस्ताच्चापमथाच्छिनत् ॥ २७
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
गदापाणिरवारोहत्ख्यापयन्पौरुषं महत् ॥ २८
तामस्य विशिखैस्तूर्णं पातयामास भारत ।
रथादनवरूढस्य तदद्भुतमिवाभवत् ॥ २९
ततः स विपुलं चर्म शतचन्द्रं च भानुमत् ।
खड्गं च विपुलं दिव्यं प्रगृह्य सुभुजो बली ॥ ३०
अभिदुद्राव वेगेन द्रोणस्य वधकाङ्क्षया ।
आमिषार्थी यथा सिंहो वने मत्तमिव द्विपम् ॥ ३१

---

22 $^{b}$) K4 D1 महायशाः; Da1 मृतप्रजाः; D3 G3 महारथः (for °मनाः). After $22^{ab}$, Ś1 reads 6. 48. $43^{a}$–$68^{d}$. — $^{c}$) Ś1 परस्परं (for द्रोणं युधि). — K0–2 om. $22^{d}$–$24^{c}$; D6 om. $22^{d}$–$25^{a}$.

23 K0–2 D6 om. 23 (cf. v.l. 22). T1 G om. (hapl.) $23^{a}$–$25^{b}$. — $^{a}$) K3 D2 तदा (for ततस्). D3 हि (for तु). — $^{b}$) M3. 5 शुशुभातेनुरंजितौ. — $^{c}$) Ś1 K3–5 B D (except D2; D6 om.) वसंते पुष्पशबलौ. Cc cites पुष्प; Cd शबलौ. — $^{d}$) K3. 4 D2 सपुष्पाविव.

24 D6 T1 G om. 24 (cf. v.l. 22, 23). K0–2 om. $24^{abc}$ (cf. v.l. 22). — $^{a}$) D1 अमर्षात्तु (for °र्षितस्). — $^{b}$) M2 च दुर्मुखे (for चमू°).

25 T1 G om. $25^{ab}$ (cf. v.l. 23). D6 om. $25^{a}$ (cf. v.l. 22). — $^{a}$) B4 तथैनं. — $^{c}$) Ś1 प्रत्याकिरद्; K4. 5 D1 अभ्याकिरद्; D3 S अभ्यवर्षद्. — $^{d}$) B3 मेघवृष्टिरिवाचलं; S वृष्ट्या शैल(G1. 3 बाणैर्गिरि)मिवांबुदः. — After 25, D6 ins.:

164* तदप्यस्य रणे द्रोणश्चिच्छेद सशरं धनुः ।

26 $^{a}$) K0–2 चापि (for चास्य). T1 G2. 3 फल्लेन. — K5 om. (hapl.) $26^{b}$–$27^{c}$. — $^{b}$) = $5^{d}$. Ś1 रथपीडाद्; S °नीळाद्. Ś1 K0–2 D3 S अपाहरत् (for अपातयत्). — K2 om. (hapl.) $26^{c}$–$27^{d}$. — $^{d}$) D1 चतुर्भिः सायकोत्तमैः.

27 K2 om. 27; K5 om. $27^{abc}$ (cf. v.l. 26). — $^{c}$) S भल्लेन चास्य (M1 °नास्य सु°) तीक्ष्णेन. — $^{d}$) K0. 4 B2. 4 Da Dn2 D3. 4. 8 (marg. *sec. m.*) T2 Cc. d हस्तावापस्. K0. 1. 5 अवाछिनत्; K4 अथाछिनोत्; Da1 तथाछिनत्; D1 अवछिनत्; S अपातयत्.

28 $^{a}$) S (except G3 M2. 5) संछिन्न°. — K1 om. $28^{bc}$. — $^{c}$) Ś1 K0. 2 M4. 5 अपोवाह; K3 D2. 6 इ(K3 अ)वातिष्ठत्; D3 अवारोहः; M3 अपोवाहत्. K5 ख्यापयन्पौरुषं युद्धे; D1 गदापाणी रथे तस्थौ. — $^{d}$) K1 स्थापयन्; K3 D2 (marg. *sec. m.* as in text) ख्यायन्वै; D6 ख्यापन्वै; D8 स्थापयन्; G2 दीप°. T1 G4 रथात् (for महत्). K5 गदापाणिरवातरत्; D1 क्षात्रं पौरुषमास्थितः.

29 $^{a}$) D1 तामन्य-. D1 तीक्ष्णैः; T2 तूर्णीं (for तूर्णं). — $^{b}$) K0–2 पार्षतः; D1 भूतले (for भारत). — $^{c}$) Cd अनवगूढस्य; Cc °रूढस्य (as in text).

30 $^{a}$) K0. 2 तथा स; D1 ततस्तु; T1 G4 तदस्य; M1. 3. 4 स तस्य. K3 D1. 2. 6 M2. 4. 5 विमलं. — $^{b}$) G3 जित° (for शत°). Ś1 K0–3 Dn1 D1–3. 6 T1 G M1. 2 शतचंद्रं (K3 °द्र-) मनोरमं; K4 °चंद्रं मनोरथं; B Da Dn2 D4. 5. 7. 8 °चंद्रं (Da1 D8 °द्र-) सतोमरं; Dn1 (by corr.) °चंद्रं सतोरणं; T2 °चर्ममनोहरं; text as in K5 M3–5. — $^{c}$) K3 D1. 3 T1 G2. 4 M विमलं (for विपुलं). Da Dn1 रम्यं (for दिव्यं). — $^{d}$) M3–5 वि- (for प्र-). D1 सुभृशं बली; S सु(M3–5 स)महाभुजः.

31 $^{c}$) Ś1 K0–2. 5 आमिषार्थे; Da1 D8 अमिषार्थी; T2 आमिषार्थं. K0–2 महा- (for यथा). — $^{d}$) B3 T2 G3 मत्त. K5 महाद्विपं; D3 इवोपमं (marg. *sec. m.* °त्तमं).

तत्राद्भुतमपश्याम भारद्वाजस्य पौरुषम् ।
लाघवं चास्त्रयोगं च बलं बाह्वोश्च भारत ॥ ३२
यदेनं शरवर्षेण वारयामास पार्षतम् ।
न शशाक ततो गन्तुं बलवानपि संयुगे ॥ ३३
तत्र स्थितमपश्याम धृष्टद्युम्नं महारथम् ।
वारयाणं शरौघांश्च चर्मणा कृतहस्तवत् ॥ ३४
ततो भीमो महाबाहुः सहसाभ्यपतद्बली ।
साहाय्यकारी समरे पार्षतस्य महात्मनः ॥ ३५
स द्रोणं निशितैर्बाणै राजन्विव्याध सप्तभिः ।
पार्षतं च तदा तूर्णमन्यमारोपयद्रथम् ॥ ३६
ततो दुर्योधनो राजा कलिङ्गं समचोदयत् ।
सैन्येन महता युक्तं भारद्वाजस्य रक्षणे ॥ ३७
ततः सा महती सेना कलिङ्गानां जनेश्वर ।
भीममभ्युद्ययौ तूर्णं तव पुत्रस्य शासनात् ॥ ३८
पाञ्चाल्यमभिसंत्यज्य द्रोणोऽपि रथिनां वरः ।
विराटद्रुपदौ वृद्धौ योधयामास संगतौ ।
धृष्टद्युम्नोऽपि समरे धर्मराजं समभ्ययात् ॥ ३९
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
कलिङ्गानां च समरे भीमस्य च महात्मनः ।
जगतः प्रक्षयकरं घोररूपं भयानकम् ॥ ४०

C. 6. 2234
B. 6. 53. 41
K. 6. 53. 41

इति श्रीमहाभारते भीष्मपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

---

32 $32^{ab}$ = ( var. ) $19^{cd}$. — a) B D ( except D1-3. 6 ) तत्रा( B3 °था )श्चर्यम्; T1 अत्राद्भुतम्. K3 D2. 6 G1 M3-5 अपश्यामो. — b) K0 भारध्वा°; T2 भरद्वा°. K0. 2. 4 विक्रमं; Cd पौरुषम् (as in text). — c) D4. 7. 8 चास्त्रयोगेन. Cc cites अस्त्रयोगं (as in text). — d) G3 बंधं ( for बलं ). K0 बाह्वोश्च. S मारिष ( for भारत ).

33 a) Ś1 येनेदं; K4 यदेवं; B Da Dn D4. 5. 7. 8 यदेकः ( Da1 °व ). — b) K2 पार्षत; D1 मारिष. T G संक्रुद्धं समवारय( G3 °किर )त्; M संक्रुद्धः समवारयत् (M1 °न्). — c) D8 चचाल ( for शशाक ). M2 तदा ( for ततो ). — d) D1 वारितः शरवृष्टिभिः.

34 ab) K3 D2. 6 अपश्यामो. S निवारितस्तु द्रोणेन धृष्टद्युम्नो महारथः ( M3-5 °बलः ). — c) Ś1 B4 Dn2 D1. 4. 8 वारयानं; K2 वारयाणा; K3-5 B1-3 Da Dn1 D2. 3. 5 वारयंतं. Ś1 K0-3. 5 D1-3 शरान्घोरांश्च ( for शरौघांश्च ). S न्यवारयच्छरौघांस्तांश्च ( G2 °घांश्च; G3 °घांस्ता ). — d) G2 मर्मणा.

35 b) Dn2 D4. 7. 8 T1 G4 सहसा न्यप°. — c) K2 D8 सहाय्य°. Ś1 K0. 2. 3. 5 Da Dn1 D2. 5. 6 बलवान् ( for समरे ). — d) Ś1 K0-2 महाबलः; K5 महारणे.

36 a) K3 D2. 6 विशिखैर् ( for निशितैर् ). — c) B4 पातयंतं; Da Dn1 D5 T1 G2. 4 पार्षतं तु. K4 क्षणात्; Dn2 D3 T1 G2. 4 M रथं; G1. 3 रथात् ( for तदा ). Ś1 K3 D2. 6 त्वरन्राजंस्; K5 रथं राजंस; T2 महाराज ( for तदा तूर्णम् ). K0-2 पार्षतं चतुरं राजंस; D1 पार्षतं विरथं भीमः. — d) Ś1 K0-3. 5 D2. 6 तूर्णम्; D1 स्वयम् ( for अन्यम् ). K5 स्वकं; D3 S तदा ( for रथम् ).

37 Ś1 om. $37^{ab}$. — a) D3 राजन्. — b) K0-3 B D2. 7 Cc कालिंगं. K3. 5 Da1 D2. 6 समनोद°. — c) S गुप्तं ( for युक्तं ). — d) K0 भारध्वा°. Ś1 K0-2 कारणात्; K3-5 B D ( except Dn1 D3 ) गोपने ( for रक्षणे ).

38 a) D1 सु- ( for सा ). — b) Ś1 कालिंगानां. Ś1 K0-4 D2. 6 नराधिप; K5 जनेश्वरः; Da2 Dn2 D4. 8 नरेश्वर ( for जने° ). — c) Ś1 अभ्युदयौ; K1 अद्य ययौ; K3 B D ( except D3. 6 ) M3-5 अभ्याययौ; M1 अभ्युद्यता; M2 °द्यतस्. K5 शीघ्रं; B Da Dn D4. 5. 7. 8 भीमा ( for तूर्णं ).

39 a) Ś1 पंचाल्यम्; K1 पंचालिम्; D6 पांचालम्. K0 B4 Dn2 D4. 7. 8 अपि; K1. 2. 4. 5 D1. 3 अथ ( for ( for अभि- ). B3 °ल्यमभिसंगम्य. — b) S द्रोणः प्रहरतां वरः. — M3. 5 om. $39^{cd}$. — c) D3 m S ( except T2; M3. 5 om. ) क्रुद्धौ ( for वृद्धौ ). — d) D3 वार° ( for योध° ). K3 D1. 3 S ( except M4; M3. 5 om. ) संयुगे. — e) K0-2 सहसा ( for समरे ). — f) Ś1 K0. 2. 3. 5 B3 D1-3. 6 T1 G4 धर्मराजानमभ्ययात्; K1 दर्मराजश्चाद्द्रवात् ( corrupt ); T2 G1. 3 M3-5 धर्मराजानमन्वयात्; G2 °राजानपालयत् ( sic ).

40 b) A few MSS. तुमलं. K0 S रोम° ( for लोम° ). — c) D1 कालिंगानां. — d) K3 भीष्मस्य च;

# ५०

C. 6. 2235
B 6. 54. 1
K 6. 54. 1

धृतराष्ट्र उवाच ।

तथा प्रतिसमादिष्टः कलिङ्गो वाहिनीपतिः ।
कथमद्भुतकर्माणं भीमसेनं महाबलम् ॥ १
चरन्तं गदया वीरं दण्डपाणिमिवान्तकम् ।
योधयामास समरे कलिङ्गः सह सेनया ॥ २

संजय उवाच ।

पुत्रेण तव राजेन्द्र स तथोक्तो महाबलः ।
महत्या सेनया गुप्तः प्रायाद्भीमरथं प्रति ॥ ३
तामापतन्तीं सहसा कलिङ्गानां महाचमूम् ।
रथनागाश्वकलिलां प्रगृहीतमहायुधाम् ॥ ४
भीमसेनः कलिङ्गानामार्छद्भारत वाहिनीम् ।
केतुमन्तं च नैषादिमायान्तं सह चेदिभिः ॥ ५
ततः श्रुतायुः संक्रुद्धो राज्ञा केतुमता सह ।
आससाद रणे भीमं व्यूढानीकेषु चेदिषु ॥ ६
रथैरनेकसाहस्रैः कलिङ्गानां जनाधिपः ।
अयुतेन गजानां च निषादैः सह केतुमान् ।
भीमसेनं रणे राजन्समन्तात्पर्यवारयत् ॥ ७
चेदिमत्स्यकरूषाश्च भीमसेनपुरोगमाः ।

---

$K_5$ भीमस्य सु॰. — $^e$) $D_1$ संक्षय°; $T_1$ $G_4$ प्रेक्षण° (for प्रक्षय°). — $^f$) $K_{0-2.5}$ भयावहं; $K_3$ $D_{2.6}$ महाबलं; $D_8$ दुरासदं (for भयानकम्).

Colophon. — *Sub-parvan:* Omitting sub-parvan name, $K_{0-2}$ mention only द्वितीययुद्धदिवस; $K_4$ Da $Dn_1$ $D_5$ द्वितीयेह्नि; $K_5$ द्वितीयदिवस; $B_3$ $D_6$ द्वितीयदिवससंग्राम($D_6$ °सयुद्ध); $M_4$ द्वितीयाह्निक. — *Adhy. name:* $K_4$ धृष्टद्युम्नपराजयः; Da $Dn_1$ $D_5$ धृष्टद्युम्नयुद्धं. — *Adhy. no.* (figures, words or both): $Da_2$ 11; $Dn_2$ $M_5$ 51; $D_1$ $M_{3.4}$ 50; $D_5$ 53; T G 48; $M_{1.2}$ 49 (as in text). — *Śloka no.:* $Dn_2$ $D_5$ 41.

## 50

1 $^a$) $K_{0-2}$ $M_{1.2}$ ततः; $D_1$ यथा; $T_2$ $G_{1.3}$ तदा (for तथा). $T_1$ $G_{2.4}$ मम पुत्रसमादिष्टः; Cal. ed. पुत्रेण मम संप्रोक्तः. — $^b$) $K_{0-2}$ $M_3$ कालिंगो. — $^d$) $T_2$ $G_{1.3}$ $M_{1.2}$ महारथं (for °बलम्).

2 $^a$) $K_{0-2}$ वर्तंतं (for चरन्तं). $Ś_1$ $K_{0-2.5}$ समरे (for गदया). $M_4$ वीर. — $^b$) $Ś_1$ $K_{0-3}$ $B_{1-3}$ $D_{1-3.6}$ दंडहस्तम्; $K_5$ हस्तदंडम्. — $^d$) $Ś_1$ **गः; $K_{0-2.4}$ B $Da_2$ $Dn_2$ $D_{5.7}$ कालिंगः. $T_1$ $G_4$ transp. सह and सेनया. $Ś_1$ सर्वे (for सह).

3 $^{ab}$) $D_1$ दुर्योधनेन राजेंद्र तथादिष्टो महाबलः. — $^c$) $K_{4.5}$ B Da Dn $D_{1.4.5.7.8}$ $M_{3.5}$ युक्तः; $G_2$ गुप्तं (for गुप्तः). — $^d$) $Ś_1$ $K_1$ प्रोयाद्.

4 $^a$) $K_{1.5}$ $Dn_1$ (by corr.) $D_6$ तमा°. $B_{1.2.4}$ $Dn_2$ $D_{1.3.4.7.8}$ S महतीं (for सहसा). — $^b$) $G_1$ कालिंगानां. — $^c$) $K_{2-4}$ $D_2$ $G_1$ $M_2$ रथा नागाश्वं; B Da Dn $D_{1.3-5.7.8}$ $M_{3-5}$ रथाश्वनाग°; $G_3$ (*inf. lin.* as in text) रथनागां च कलिलां. — $^d$) S °महागदः.

5 $^a$) $D_1$ भीमस्तत्र (for °सेनः). — $^b$) $K_5$ आव छंद् (hypermetric); $T_2$ छिंदन्; $M_2$ अछंद्; $G_{1.3}$ आछंद् (as in text). $K_{0.2}$ भरत. — $^c$) $T_2$ नैषादीन्; $M_2$ °पादीम्. — $^d$) $Ś_1$ $K_{0-2.4}$ संयांतं; $D_2$ संसक्तं; S आसाद्य ($T_2$ समन्युः) (for आयान्तं).

6 $^a$) $K_5$ ततः शतायुः संनद्धो. — $^b$) $D_1$ $T_2$ $M_{3-5}$ राजन्; $M_{1.2}$ राजा (for राज्ञा). — After $6^{ab}$, $Ś_1$ reads $7^c$, *repeating* it in its proper place. — $^d$) $K_4$ B D (except $D_{2.3.6}$) व्यूढानीकेन ($K_4$ °g) दंशितः; S °नीको महाबलः.

7 $^a$) S रथस्थै(M °थैस्तै)र्बहुसाहस्रैः. — $^b$) $G_3$ कालिंगानां. $Ś_1$ $K_{3.4}$ $D_6$ नराधिपः; $B_{1.2}$ $Da_1$ जनाधिप; $B_3$ S जनेश्वरः ($T_2$ °र); $D_{1-3}$ नराधिप. — $^c$) $G_1$ गदानां. $T_2$ युयुधेनेन गदिना. — $^d$) $D_1$ केतुना (for केतुमान्). — $^e$) $Dn_2$ $D_{4.3}$ महाराज (for रणे राजन्). — $^f$) $K_{2.3}$ $D_{1.4}$ $M_4$ पर्यवारयन्.

8 $^a$) $Ś_1$ $K_{3-5}$ B D (except $D_{1.3}$) °करूषास्तु; $K_{0-2}$ °करूषांश्च; S °क($M_{1.2}$ °कु)रूशाश्च. — $^b$) $Ś_1$

अभ्यवर्तन्त सहसा निपादान्सह राजभिः ॥ ८
ततः प्रववृते युद्धं घोररूपं भयानकम् ।
प्रजानन्न च योधान्स्वान्परस्परजिघांसया ॥ ९
घोरमासीत्ततो युद्धं भीमस्य सहसा परैः ।
यथेन्द्रस्य महाराज महत्या दैत्यसेनया ॥ १०
तस्य सैन्यस्य संग्रामे युध्यमानस्य भारत ।
बभूव सुमहाञ्शब्दः सागरस्येव गर्जतः ॥ ११
अन्योन्यस्य तदा योधा निकृन्तन्तो विशां पते ।
महीं चक्रुश्चितां सर्वां शशशोणितसंनिभाम् ॥ १२
योधांश्च स्वान्परान्वापि नाभ्यजानञ्जिघांसया ।
स्वानप्याददते स्वांश्च शूराः समरदुर्जयाः ॥ १३
विमर्दः सुमहानासीदल्पानां बहुभिः सह ।
कलिङ्गैः सह चेदीनां निषादैश्च विशां पते ॥ १४
कृत्वा पुरुषकारं तु यथाशक्ति महाबलाः ।

C. 6. 2249
B. 6. 54. 15
K. 6. 54. 15

---

Ko-2 °सेनपुरोगमान् (Ś1 °माः); D1 S °सेनपदानुगाः; D3 °सेनपुरःसराः. — c) D1 अभ्यवर्पंत. Ś1 K3 D6 सहिता (for सहसा). D3 S अभ्यधावंत समरे. — d) Ko-3 D1. 6 निपादाः; S निपादैः.

9 a) Da1 प्रवर्तते. — b) Ś1 K D2. 3. 6 M1. 2. 4 भयावहं (for °नकम्). — After 9ab, M1-3. 5 ins. (cf. 16):

165* सर्वे कलिङ्गकाश्चैव संनिवृत्तेषु चेदिषु ।
स्वबाहुबलमास्थाय अभ्यवर्तन्त पाण्डवम् ।

— c) Ko. 2 प्रजानन्नपि; K3 D2. 3 प्राजानन्न च; K4 B1. 3 Da प्रबाधनं च; B2. 4 Dn2 D4. 7. 8 प्रधावतां च; Dn1 D5 प्रबोधनं च; T G परेषां तव; M1-3. 5 शूराणां तत्र. K3 D2. 3. 6 योधाः स्वान् (D6 °धास्तान्); K4 B Da Dn D4. 5. 7. 8 S (except M4) योधानां. K1 प्रजानन्नप्रयोधां तु; D1 तावकानां परेषां च.

10 a) Ś1 भीमम् (for घोरम्). S घोररूपं ततो (M1-3 °घोर्) युद्धं. — b) Dn2 भीमस्य सह सायकैः; D1 भीमस्य रिपुभिः सह. — d) K3 D2. 6 महत्या सेनया-नघ (K3 °या सह).

11 a) D5 संग्रामे; T1 G समरे (for संग्रामे). — b) Da1 D6 युद्धमा°. — c) K2 B3 M3. 5 सुमहाशब्दः; D1 °हाब्दादः. Ś1 बभूवुः सुमहाञ्छब्दाः. — d) Da1 सागरस्यैव. K3. 5 D2. 6 दीर्यतः; K4 वर्जतः; B Da Dn1 D6 वर्धतः; Dn2 D4. 8 सर्वतः; D7 पर्वणि; T1 G निस्वनः; M1 गर्जितं (for गर्जतः).

12 a) Ko. 5 B2 D3 T2 G1. 3 M1. 2 अन्योन्यं स; K1 °न्यं स; K3 D2. 6 °न्यं ते; D1 °न्यं च (for °न्यस्य). Ś1 Ko-3. 5 D2. 6 महा-; B1 ततो; M2 तथा (for तदा). K4 अन्योन्यं सहसा योधा. — b) Ś1 Ko-2 विकि-(Ś1 °क)रंतो; K5 B2 D1 M2 विकर्पंतो (K5 °ते); T1 G4 विकत्थंतो; T2 विकृतंते; G1. 3 विकर्तंते; G2 विकर्तंत; M1. 3-5 विकर्तंतो (for निकृन्तन्तो). K5 परस्परं (for विशां पते). — c) Ś1 T2 च तां; B1. 2 चितः; Ca चितां (as in text). M1. 3-5 जिघांसंतः (for चितां सर्वां). K5 महतीं चक्रुश्चितां सर्वां (hypermetric). — d) Ko-2 रक्त-लोहितसंनिभां; K3. 5 D2. 3. 6 शश (K5 श्वास) लोहित°; K4 B3 Dn2 D1. 4. 7. 8 T G M2 मांसशोणितसंनिभां (D8 °कर्दमां; T1 G2. 4 M2 °कर्दमैः); M1 शतशोणित°; M4 शवशोणित°.

13 a) K3 D2. 3. 6 योधाश्च स्वान्; K5 योधांश्चास्वान्; Da Dn1 D5 योधान्स्वांश्च; Dn2 D1. 4. 7. 8 M1 योधा-न्स्वान्स्वान्; T1 G M3. 5 योधान्स्वान्वा; T2 M2. 4 योधाः स्वान्वा (M2 स्वांश्च). Ko-2 परांश्चैव; B3 D (except D2. 3. 6) M2 परांश्चापि. Ś1 योधांश्च स्वापरांश्चापि. — b) K5 नाभिजानन्; B2 Dn2 D4. 7 न ह्यजानन्; D8 न जानंत. — D5 G1. 3 om. 13cd. — c) Ś1 Ko-3 D2. 3. 6 M स्वान्; K4 B3 Da2 स्वांश्च; Dn2 D7. 8 तु स्वाः; D4 तुष्टाः (for स्वाश्च). K5 स्वान्रथा ददृशुः सत्ते; D1 स्वानप्याजघ्निरे शूराः; T1 G4 °प्याददतेसाकं; T2 समाजघ्नुश्च ते तत्र; G2 स्वकानप्याददेसाकं. — d) Ko-3 Dn1 D2. 3. 6 T2 G2 परम° (for समर°). D3 भीषणा नदतो मुहुः.

14 d) K2 विषादैश्च; Da D5 निस्वादैश्च.

15 b) K3 D2. 6 यथावीर्यं; K5 Cd यथाशक्तिर्; T1 G4 ययाशक्तिं. Ś1 Ko-3. 5 D2. 6 यथाबलं; K4 D1 महाबलं; Da1 यथाबलः (for महाबलाः). — M1. 2 om. (hapl.) 15c-17b. — c) Ś1 Ko-3. 5 D2. 6 समासाद्य; K2 अनासाद्य (for परित्यज्य). — d) K1 D1. 6 G2 स न्यवर्तंत; Da1 D2 T2 संन्यवर्तंत; D3 संनिवर्तंत. T1 G4 चेदत; G2 चोदयः. Cd as in text.

C. 6. 2250
B. 6. 54. 16
K. 6. 54. 16

भीमसेनं परित्यज्य संन्यवर्तन्त चेदयः ॥ १५
सर्वैः कलिङ्गैरासन्नः संनिवृत्तेषु चेदिषु ।
स्वबाहुबलमास्थाय न न्यवर्तत पाण्डवः ॥ १६
न चचाल रथोपस्थाद्भीमसेनो महाबलः ।
शितैरवाकिरन्बाणैः कलिङ्गानां वरूथिनीम् ॥ १७
कलिङ्गस्तु महेष्वासः पुत्रश्चास्य महारथः ।
शक्रदेव इति ख्यातो जघ्नतुः पाण्डवं शरैः ॥ १८
ततो भीमो महाबाहुर्विधुन्वन्रुचिरं धनुः ।
योधयामास कालिङ्गान्स्वबाहुबलमाश्रितः ॥ १९
शक्रदेवस्तु समरे विसृजन्सायकान्बहून् ।
अश्वाञ्जघान समरे भीमसेनस्य सायकैः ।
ववर्ष शरवर्षाणि तपान्ते जलदो यथा ॥ २०
हताश्वे तु रथे तिष्ठन्भीमसेनो महाबलः ।
शक्रदेवाय चिक्षेप सर्वशैक्यायसीं गदाम् ॥ २१
स तया निहतो राजन्कलिङ्गस्य सुतो रथात् ।
सध्वजः सह सूतेन जगाम धरणीतलम् ॥ २२
हतमात्मसुतं दृष्ट्वा कलिङ्गानां जनाधिपः ।
रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः ॥ २३

---

16 With 16, cf. 165*. — M1. 2 om. 16 ( cf. v. l. 15 ). Ko. 1 om. $16^{a}$–$17^{b}$. — a) K5 स तैः; D1 भीमः ( for सर्वैः ). K3 D1–3. 6 आसक्तः; K5 आसन्नैः; M3–5 मगधैः; Cc आसन्नः ( as in text ). T G1. 3. 4 सर्वे( T2 °र्वै )कालिंगकाश्चैव; G2 सर्वान्कालिंगकांश्चैव. — c) B2 °बलमाश्रित्य; D1 °बलसंपन्नः. — d) Ś1 K3 B1. 3. 4 Dn2 D1. 3. 4. 7. 8 M4 संन्य°; K2. 5 D6 स न्यवर्त( K5 °र्तं )त; B2 D3 न न्यवर्तत; T1 G अभ्यवर्षत; T2 अभ्यवर्तत; M3. 5 संन्यवर्तत. K2 पांडव; K6 T G पांडवं; M3. 5 चेदयः.

17 Ko. 1 M1. 2 om. $17^{ab}$ (cf. v. l. 15, 16). — a) M3–5 रथात्पार्थो ( for रथोपस्थाद् ). — c) K5 स तैर्; D1 शरैर्; D2 शतैर्; D6 सर्वैर् ( for शितैर् ). K4. 5 B1. 2. 4 D1. 8 S ( except T2 M2 ) अवाकिरद् ( D1 °त् ); D4. 7 अवकिरन्. D1 सर्वां ( for बाणैः ).

18 a) K4 B1. 3. 4 Da Dn D4. 5. 7 कालिंगस्तु; B2 D1 S क( B2 M1. 3 का )लिंगश्च. — b) K3 महाद्युतेः; K5 M2 °बलः ( for °रथः ). — c) D3 शत्रुदेव. Ko इवाख्यातो. — d) पार्थिवं ( for पाण्डवं ). K4 पांडवं जग्मतुः शरैः.

19 b) K3 D2. 6 S प्रगृह्य ( for विधुन्वन् ). Ś1 Ko–2 रथिनां वरः; D1. 8 विपुलं धनुः. — c) M4 रोध° ( for योध° ). Ś1 कलिंगं; K4 B D ( except D2. 3. 6 ) कालिंगं. — d) D3 आस्थितः.

20 a) K5 D3 शत्रुदेवस्तु; B3 शक्रदेवोपि. S ( except M4 ) भीमस्य ( for समरे ). — S transp. $20^{cd}$ and $20^{ef}$. — c) K1 अश्वं. B4 D ( except D1–3. 6 ) चतुरो ( for समरे ). S जघान चाश्वा( T2 साश्वा )न्समरे. — d) K5 वीर्यवान् ( for सायकैः ). — After $20^{cd}$, N ins.:

166* तं दृष्ट्वा विरथं तत्र भीमसेनमरिंदमम् ।
शक्रदेवोऽभिदुद्राव शितैरवकिरञ्शरैः ।
भीमस्योपरि राजेन्द्र शक्रदेवो महाबलः ।

[ ( L. 1 ) K5 हताश्वं च तथा दृष्ट्वा. Da Dn D5. 8 °रिंदम. — ( L. 2 ) K5 D3 शत्रुदेवोभिदुद्राव; B3 Da D5 शक्रदेवोपि दु°. K2 D2. 6 शतैर्. Ś1 अवा° ( for अव° ). B Da Dn D1. 4. 5. 7. 8 किरंतं ( B1 °स्तु; B2–4 °तं ); निशितैः शरैः. — ( L. 3 ) K5 D3 शत्रुदेवो. ]

— D8 ( following upon 166* ) om. ( hapl. ) $20^{e}$–$21^{b}$. — e) Ś1 K3. 5 D2. 6 शरजालानि.

21 a) S स हताश्वे ( for हताश्वे तु ). — c) K5 D3 शत्रु° ( for शक्र° ). — d) Ś1 सर्वसैक्या°; Ko. 1 D3. 6. 8 G M Cc सर्वसैक्या°; K1 D2 सर्वसैन्या°; सर्वसैन्यहरां; Ca. d °शैक्या° ( as in text ).

22 K2 om. ( hapl. ) $22^{ab}$. — a) S गदया ( for स तया ). Ko. 1 गृहितो; K6 D1. 8 S ( except M2 ) [अ]भिहतो ( for निहतो ). G3 M3–5 राजा. — B1. 2. 4 Dn2 D4 कालिंगस्य. B3 D3 S क( B3 का )लिंगतनयो रथात्. — d) D1 पपात ( for जगाम ). धरणीतले; T1 G जगतीतलं.

23 a) D1 ततः कलिंगो राजेंद्र. — b) Dn3 कालिंगा°. K2 जनाधिप; K5 S जनेश्वरः; महारथः ( for जनाधिपः ). — d) Da Dn1 °वारयन्. G1. 3 M3. 5 दिशं. — After 23, S ins. ( cf. $7^{cd}$ ):

167* अयुतेन गजानां च निषादैः परिवारितः ।

ततो भीमो महाबाहुर्गुर्वीं त्यक्त्वा महागदाम् ।
उद्बर्हाथ निस्त्रिंशं चिकीर्षुः कर्म दारुणम् ॥ २४
चर्म चाप्रतिमं राजन्नार्षभं पुरुषर्षभ ।
नक्षत्रैरर्धचन्द्रैश्च शातकुम्भमयैश्चितम् ॥ २५
कलिङ्गस्तु ततः क्रुद्धो धनुर्ज्यामवमृज्य ह ।
प्रगृह्य च शरं घोरमेकं सर्पविषोपमम् ।
प्राहिणोद्भीमसेनाय वधाकाङ्क्षी जनेश्वरः ॥ २६
तमापतन्तं वेगेन प्रेरितं निशितं शरम् ।
भीमसेनो द्विधा राजंश्चिच्छेद विपुलासिना ।
उदक्रोशच्च संहृष्टस्त्रासयानो वरूथिनीम् ॥ २७
कलिङ्गस्तु ततः क्रुद्धो भीमसेनाय संयुगे ।
तोमरान्प्राहिणोच्छीघ्रं चतुर्दश शिलाशितान् ॥ २८
तानप्राप्तान्महाबाहुः खगतानेव पाण्डवः ।
चिच्छेद सहसा राजन्नसंभ्रान्तो वरासिना ॥ २९
निकृत्य तु रणे भीमस्तोमरान्वै चतुर्दश ।
भानुमन्तमभिप्रेक्ष्य प्राद्रवत्पुरुषर्षभः ॥ ३०
भानुमांस्तु ततो भीमं शरवर्षेण छादयन् ।
ननाद बलवन्नादं नादयानो नभस्तलम् ॥ ३१
न तं स ममृषे भीमः सिंहनादं महारणे ।
ततः स्वरेण महता विननाद महास्वनम् ॥ ३२

C. 6. 2270
B. 6. 54. 36
K. 6. 54. 36

---

24 a) Ko.1 भीमसेनो; Da Dn1 D5 अथ भीमो. Ś1 महावेगो; Ko–3.5 D2.3.6 °वेगां; D1 °वेगात् (for बाहुर्). — b) K1 D1.3 त्यक्त्वा गुर्वीं (D1 मूर्तिं). K4 B Da Dn D4.5.7.8 गदां त्यक्त्वा महाबलः; S रथादा- (G1 °थमा)प्लुत्य हृष्टवत्. — c) Ko–3 D2.6 उद्ववाहा- (Ko °र्हा)थ; K4 B3 उदकर्षच्च; B1.2 Da Dn1 D5 उदकर्षत्स (Da2 D5 °न्स); B4 Dn2 D4.7.8 उद्बबर्ह स; D1 आयार्थबद्धं (for उद्बर्हाथ). Cc cites उदकर्षत्; Ccp Cd उद्बबर्ह (as in text). K5 उद्बर्हाम्यनिस्तृंशं (sic); D3 S निस्त्रिंशमाददे घोरं. — d) M3 चिकीर्षन्. K3 D1.2.6 S दुष्करं (for दारुणम्).

25 a) Ś1 वर्म; B4 M5 कर्म. Ko चर्मा*प्रतिमं राजन्. — b) Ś1 °न्नोर्षभं; K3 Da1 °न्सर्षभं. K3 पुरुषर्षभं; K5 Dn2 D4.5.7.8 T1 G4 M पुरुषर्षभः; D1 पुरुषोत्तम. Cc cites आर्षभं; Cd वार्षभं. — c) K4 B1–3 Da Dn1 D5 सभल्लैरर्ध°; G1.3 नक्षत्रैश्चार्ध°. — d) Ś1 D3 शातकौंभ°; K1 शतकौंभ°; K3 शांतकुंभ°; K5 शात- कौंभ°. B3 चितः.

26 a) K4.5 B Da Dn D4.7 कालिंगस्तु. — b) Ś1 Ko–2 Da1 D6 °ज्यामवसृज्य; B2 °गृंह्यावमृज्य; D1 °ज्यां चाव°; G2 °ज्यामप°. Ko–2.4.5 B1–3 Da Dn D1.5.8 S च; D3 सः (for ह). — c) K3 D2.6 प्रहृष्टः (for प्रगृह्य). Ś1 Ko.2–5 B4 D (except D1.3) T2 स (for च). S तीक्ष्णम् (for घोरम्). — f) Ko.2 Da2 D2.3 वधकांक्षी; S जयकांक्षी. Ś1 Ko.3 D2.3 जनेश्वर; B Da2 D1.5 नरेश्वर; Da1 Dn D4.7 नरेश्वरः.

27 b) K5 S प्रेषितं. D1 पूरितं निशितं शरैः. — c) D2 महाराज (for द्विधा राजंश्). — d) Ś1 Ko.1.3.4 D1.2.6 विमला°; K5 निशिता° (for विपुला°). — e) K1.2 उदक्रोशश्च; K3 D1 M4 °शंश्च; B2 तदाक्रोशच्च. T2 सहसा; M3.5 संक्रुद्धस् (for संहृष्टस्). — f) D1 ताप° (for त्रास°). B1.2.4 D (except D1–3.6) बलं तव (for वरूथिनीम्).

28 K4 om. 28–29. — a) K5 B Da2 Dn2 D1.4.5.7.8 कालिंगो (B1 °गस्). K5 B2–4 D (except D2.3.6) S [ऽ]थ (for तु). — b) B1.2.4 D (except D2.3) S भीमसेनस्य. — c) Ś1 प्रहि°. — d) K1 शिलाचितान्; K3 Da Dn1 D1.5 °सितान्.

29 K4 om. 29 (cf. v.l. 28). — b) Ko.2 खगतानिव; D1 शरांस्तस्य च (for खगतानेव). — c) S समरे (for सहसा). D1 संचिच्छेद महाराजन्.

30 a) Ś1 निक्षिप्य; D8 निकृंत्य. M3–5 तरसा (for तु रणे). — c) Ś1 Ko.2.3.5 D2.6 Cv अभिद्रुत्य; K1 अतिक्रम्य (sic); D1.3 S ततो भीमः (for अभिप्रेक्ष्य). — d) K3 D2–4.7.8 पुरुषर्षभ; K5 भरतर्षभः; Da Dn1 D5 S पुरुषोत्तमः.

31 T1 G4 om. (hapl.) 31[ab]. B3 transp. 31[ab] and 31[cd]. — a) Ko भौमं (for भीमं). S (T1 G4 om.) भानुमानपि संक्रुद्धः. — b) K3 D2.6 ताडयन्; D1 चार्दयत् (for छाद°). K4 S शरवर्षैरवाकिरत्. — c) Ko Da1 Dn1 D1.3.4 बलवान्; S सिंहवन्. — d) Ś1 M1.4.5 छाद°; K2 नद° (for नाद°). T G1.2.4 M1.5 नभस्थलं.

32 a) K3.4 B3 D1.2.6 स तं न; K5 न तं च; D3

C. 6. 2270
B. 6. 54. 36
K. 6. 54. 36

तेन शब्देन वित्रस्ता कलिङ्गानां वरूथिनी ।
न भीमं समरे मेने मानुषं भरतर्षभ ॥ ३३
ततो भीमो महाराज नदित्वा विपुलं स्वनम् ।
सासिर्वेगादवप्लुत्य दन्ताभ्यां वारणोत्तमम् ॥ ३४
आरुरोह ततो मध्यं नागराजस्य मारिष ।
खड्गेन पृथुना मध्ये भानुमन्तमथाच्छिनत् ॥ ३५
सोऽन्तरायुधिनं हत्वा राजपुत्रमरिंदमः ।
गुरुभारसहस्कन्धे नागस्यासिमपातयत् ॥ ३६
छिन्नस्कन्धः स विनदन्पपात गजयूथपः ।
आरुग्णः सिन्धुवेगेन सानुमानिव पर्वतः ॥ ३७
ततस्तस्मादवप्लुत्य गजाद्भारत भारतः ।
खड्गपाणिरदीनात्मा अतिष्ठद्भुवि दंशितः ॥ ३८
स चचार बहून्मार्गानभीतः पातयन्गजान् ।
अग्निचक्रमिवाविद्धं सर्वतः प्रत्यदृश्यत ॥ ३९

---

न च तं; S न तु तं ( M1.3.5 तन् ). K5 वीरः ( for भीमः ). — $^{b}$) B1.4 महामृधे; B2 D1.3 महाहवे. — $^{c}$) D1.3 शब्देन; S स्वनेन ( for स्वरेण ). — $^{d}$) K0 महास्वरं; K2 महासुरं; K5 B2.3 Dn2 D4.7.8 °स्वनः; S °बलः.

33 $^{a}$) D3 नादेन ( for शब्देन ). B1.4 महता ( for वित्रस्ता ). — $^{b}$) G1.3 वरूथिनीं. — $^{c}$) D1 भीमं न ( by transp. ). D6 transp. भीमं and मेने. K3 न मेने भीमसेनं स. — $^{d}$) K2 B Da Dn D4.6.7 पुरुषर्षभ; D1 पुरुषोत्तम; D3 भरतर्षभं.

34 $^{a}$) T1 G4 तदा चरन्; T2 M तथा च तं; G1.3 तदा च तं; G2 तदा चिरं ( for ततो भीमो ). Da Dn1 D5 महानादं; D3 °बाहुर् ( for °राज ). — $^{b}$) K2.4 B Dn2 D4.7 नर्दित्वा; K5 ननर्द; S विनद्य ( for नदित्वा ). K0.2 विपुलं स्वरं; D1 T1 G1.3.4 M विपुलस्वनं; T2 विपुलं बलं. — $^{c}$) K0 सासि-; K5 असिं ( for सासिर् ). K4 B Da Dn D3-5.7.8 सासिर्वेगवदाप्लुत्य; D1 °र्वेगात्पराक्रम्य; S °वेगात्समाप्लुत्य. — $^{d}$) K1 D8 वारुणो°.

35 $^{a}$) D1 मध्ये. — After 35$^{ab}$, Dn2 D4 ins. :

168* ततो मुमोच कालिङ्गः शक्तिं तामकरोद्द्विधा ।

— $^{c}$) K3 D1.2.6 पृथुधारेण; Da Dn1 D5 S पृतनामध्ये. Cc cites मध्ये ( as in text ). — $^{d}$) K0 सानु° ( for भानु° ). Ś1 अथाच्छितान् ( *sup. lin.* °नात् ); K3 D2 ( by corr. ).6 अवाच्छिनत्; K4 अथाच्छिनोत्.

36 K2 om. ( hapl. ) 36. T2 om. 36$^{ab}$. — $^{a}$) K1 D3.8 ( by corr. ) सोत्तरा°. Ca.c.d cite अन्तरायुधिनं. S उत्तरा( M5 °रं )युधिनश्चा( M3.5 °धिनिश्चा )स्य. — $^{b}$) Ś1 K0.1.5 D1 अरिंदमं; Da Dn1 D2.5 °दम. S हत्वा भीमो रणोत्कटः. — $^{c}$) K0.1 D1 M2-5 गुरुभारस( K0 °म )हं स्कंधे ( D1 स्कंधं ); K3.5 D2.6 °सहं युद्धे; K4 B Da Dn D4.5.7.8 गुरुं भारसहं ( Da1 °ह- ) स्कंधे; D3 T1 G गुरु( D3 °रुं )भारसहे स्कंधे; T2 °सहस्रस्य. — $^{d}$) K3.5 D2.6 नागस्यासिमपात( D6 °ताड )यत्; D1 नागस्य समपातयन्; स्कंधेनास्य न्यपातयत्.

37 $^{a}$) S1 छिन्नस्कंदः; K1.2 भिन्नस्कंधः ( K1 °न्नः ); T1 G4 भिन्नहस्तः. T1 G2.4 M1.3-5 स निनदन्. सिंहस्कंधगतस्येव. — D8 om. 37$^{cd}$. — T2 G1.2 अरुग्णः; K5 आरुक्षू; D3 आलुलः; आरुग्नः; Cv आरुग्णः ( as in text ). D4 सिंह°; सिन्धु° ( as in text ). D1 अरुग्लबंधनो भीमः. — K3 Da Dn D4 भानुमानिव. Cd cites सानु° ( as in text ).

38 D3 reads ( *sec. m.* ) 38$^{ab}$ in marg. — B Da Dn D4.5.7.8 पततश्चाप्यवप्लुत्य; D3 ततस्तस्माद्; T1 G4 M1.3-5 गजात्प्र( M1 °जान्प्र; °जः प्र- )पततोप्लुत्य; T2 गजात्पतत आप्लुत्य; गजात्प्रपततोत्प्लुत्य. — $^{b}$) Ś1 रथाद्; S रणे ( for गजाद् ). Ś1 K2.4 B2-4 भरत भारतः; K3 B1 D1 S भरतस° ( K3 G1.3 M4 °मः ); K5 Da1 भारत भारत; भारतसत्तम ( D6 °मः ). Cc cites भारतः ( as in text ). D8 गजादाप्लुत्य भारत. — $^{d}$) K3 D2.6 व्यतिष्ठद्. त्वतिष्ठद्भुवि दंसितः; K4 अतिष्ठस्तु विदंशितः; तस्थौ भूमौ सुदंशितः; Da Dn1 D5 S तस्थौ सुदंशि( S °सि )तः; Dn2 D4.7.8 तस्थौ भुवि स ( च ) दंशितः.

39 $^{a}$) B2 स चचाल; T G चचार च; M3-5 सु- ( for स चचार ). M1.2 चचार विविधान्मार्गान् — $^{b}$) K3 Da Dn1 D2.3.5.6.8 अभितः. K0-3 D2.3 प्रति तान्; K5 D6 प्र( K5 प्री ) ( for पातयन् ). K4 अभीतस्तान्गजान्प्रति; निपतितो भुवि; S भीमः प्रहरतां वरः. — चक्रम्; Cc अग्निचक्रम् ( as in text ). विद्धः; G2 [अ]विध्यन्; Cc [अ]विद्धं; Ca.d [आ]विद्धं

अश्ववृन्देषु नागेषु रथानीकेषु चाभिभूः ।
पदातीनां च संघेषु विनिघ्नञ्शोणितोक्षितः ।
श्येनवद्व्यचरद्भीमो रणे रिपुबलोत्कटः ॥ ४०
छिन्दंस्तेषां शरीराणि शिरांसि च महाजवः ।
खड्गेन शितधारेण संयुगे गजयोधिनाम् ॥ ४१
पदातिरेकः संक्रुद्धः शत्रूणां भयवर्धनः ।
मोहयामास च तदा कालान्तकयमोपमः ॥ ४२
मूढाश्च ते तमेवाजौ विनदन्तः समाद्रवन् ।
सासिमुत्तमवेगेन विचरन्तं महारणे ॥ ४३
निकृत्य रथिनामाजौ रथेषाश्च युगानि च ।
जघान रथिनश्चापि बलवानरिमर्दनः ॥ ४४
भीमसेनश्चरन्मार्गान्सुबहून्प्रत्यदृश्यत ।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतम् ।
संपातं समुदीर्यं च दर्शयामास पाण्डवः ॥ ४५

C. 6. 2234
B. 6. 54. 50
K. 6. 54. 50

(as in text). — $^{d}$) Ś1 (also as in text) K1 D8 प्रतिदृश्यत; G2 प्रत्यविध्यत.

40 D8 om. 40. D5 om. (? hapl.) $40^{abcd}$. — $^{b}$) K0 रथानेकेषु; Da गजानीकेषु; D1 रथवृंदेषु. Ś1 चाभितः; K0–3. 5 D2. 3 चाभिभुः; K4 B वाभिभूः; Da1 चाविभुः; Da2 वाभिभुः; Dn D4. 7 वा विभुः; D1 च प्रभुः; T1 (before corr. as in text)) चाबभौ. — $^{c}$) K1 संगेषु; Da1 (also as in text) संघे च. — $^{d}$) M1. 2 विनदन् (for विनिघ्नन्). Ś1 शोणितोषितः; Dn2 D4. 7 प्रत्यदृश्यत (for शोणितोक्षितः). — $^{e}$) Ś1 Dn2 D4. 6 विचरन्; K0–2 B D7 व्यचरन्; K3 D1. 2 विचरद्; K5 व्यनदन्. B Da Dn D4. 5. 7 संख्ये (for भीमो). — $^{f}$) K4 D6 रणेरिपु; B Da Dn1 D5 भीमो युधि; T2 रणे तु स; M रणेषु च (for रणे रिपु-). M2 रणो° (for बलो°). Dn2 D4. 7 युधि भीमो महाबलः; T1 G रणे तु समरोत्कटः.

41 $^{a}$) K3 छिद°; K5 छिंदि°; Da1 छिदं°; D6 छिन्नं°. — $^{b}$) K0–2. 5 D3 S °बलः (for °जवः). — $^{c}$) K0 खड्गेण. K5 शत° (for शित°). — $^{d}$) D3 (marg. *sec. m.* as in text) राजयोगिनां; T1 जययोधिनां (for गजयोधिनाम्).

42 $^{c}$) K3 च स तान्; K4 B Da2 Dn D4. 7. 8 S शूरांस्तान्; Da1 शूरांश्च; D1 पुत्रांस्ते; D2 स च तान् (for च तदा). D3. 6 स मोहयामास च तान्. — $^{d}$) K2 कालांतक इवोपमः; Ca as in text. — After 42, T1 G4 ins.:

169* पदातिभिः पदातींश्च अश्वानश्वैर्गजान्गजैः ।
रथान्रथैश्च बहुधा जघान समरे बली ।

43 T2 om. $43^{ab}$. — $^{a}$) K0. 1 मोहाश्च (for मूढाश्च). K4 B Da Dn1 D4. 5. 7. 8 S (T2 om.) मूढास्तमेव च रणे; Dn2 मूढास्त एव च रणे; D1 मूढाश्च स ततो **. — K0. 1 om. (hapl.) $43^{b}$–$44^{a}$. — $^{b}$) K3 D2 विनर्दंतः; Da1 विनष्टं तत्; D6 विमर्दंतः; D3 निनदंतः. K2 Da1 D6 समाद्रवत्; T1 G4 तथाद्रवन्. K5 नदंतः समुपाद्रवत्; D1 सगजाः सह सादिभिः. — After $43^{ab}$, D1 ins.:

170* विभुज्य क्षुधिता नादं विद्रवन्ति दिशो दश ।
भ्रमन्तं कालरूपेण भीमसेनं महाबलम् ।

— M2 om. $43^{cd}$. — $^{c}$) S (M2 om.) सोसिमुद्यम्य च रणे. — $^{d}$) K2 Da1 D2 विचरंत. B1. 2 महाहवे; D1 अभीतवत् (for महारणे). S (M2 om.) वेगेन व्यचरन्नदन् (T1 G °रद्बली).

44 K0. 1 om. $44^{a}$ (cf. v.l. 43). — $^{a}$) K2. 3 D2. 6 विकृत्य; K5 निकृंत. B2 रश्मिनाम्. K3–5 D2. 3. 8 S चाजौ; Cc. d आजौ (as in text). D1 निकृंतं रथिनस्त्वाजौ. — $^{b}$) K0–3 Da Dn D2. 4–8 S रथेषां च; D1 रथैषां च. — $^{c}$) D1 M3–5 रथिनां (M4 °नं) चापि. — $^{d}$) D6 रिपु° (for अरि°).

45 $^{b}$) S बहून्दृढपराक्रमः. — K5 om. $45^{c}$–$46^{b}$. — $^{c}$) D1. 3 S (except M1. 2) भ्रांतमाविद्धमुद्भ्रांतम् (by transp.); Ca. c. d. v as in text. — $^{d}$) D1 आवृतं; M3. 5 आप्लुतः; Cv आप्लवं; Ca. c. d आप्लुतं (as in text). K1 प्रसृतं; D1 प्रस्थितं; T2 G1. 3 प्रद्रुतं; M3. 5 प्रसृजन्; Ca. c. d. v प्रसृतं (as in text). K0. 1 सृतं; K2. 4 B Da2 Dn1 D1. 4. 7 प्लुतं; S (except G2) द्रुतं; Ca स्रुतं; Cv स्तृतं; Cc सृतम् (as in text). — $^{e}$) D1 संजातं; T G2. 4 संगतं; G1. 3 M1–3. 5 संहतं; Cv संयतं; Ca. d संपातं (as in text). Cc cites संपातः. Ś1 समुदी*च; K0. 2 D4 समुदीयं (K0 °तं) च; K4 B Da Dn D2. 5 Ca. d °दीर्णं च; D1 समप्रदीप्तं च; D3 समुदीपं च; D3 Cd °दायं च; T1 G2. 4 M4 °दीप्तं च; T2 G1. 3 M1–3. 5 °दीप्तं तं;

C. 6. 2284
B. 6. 54. 51
K. 6. 54. 51

केचिदग्रासिना छिन्नाः पाण्डवेन महात्मना ।
विनेदुर्भिन्नमर्माणो निपेतुश्च गतासवः ॥ ४६
छिन्नदन्ताग्रहस्ताश्च भिन्नकुम्भास्तथापरे ।
वियोधाः स्वान्यनीकानि जघ्नुर्भारत वारणाः ।
निपेतुरुर्व्यां च तथा विनदन्तो महारवान् ॥ ४७
छिन्नांश्च तोमरांश्चापान्महामात्रशिरांसि च ।
परिस्तोमानि चित्राणि कक्ष्याश्च कनकोज्ज्वलाः ॥ ४८

ग्रैवेयाण्यथ शक्तीश्च पताकाः कणपांस्तथा ।
तूणीराण्यथ यन्त्राणि विचित्राणि धनूंषि च ॥ ४९
अग्निकुण्डानि शुभ्राणि तोत्रांश्चैवाङ्कुशैः सह ।
घण्टाश्च विविधा राजन्हेमगर्भांस्त्सरूनपि ।
पततः पतितांश्चैव पश्यामः सह सादिभिः ॥ ५०
छिन्नगात्रावरकरैर्निहतैश्चापि वारणैः ।
आसीत्तस्मिन्समास्तीर्णा पतितैर्भूर्नगैरिव ॥ ५१

---

$C_c$ cites °दीर्यं (as in text). — $^f$) $D_1$ दर्शयानः स; $G_3$ दशया°. B D (except $D_{1-3.6}$) $T_2$ M भारत (for पाण्डवः).

46 $K_5$ om. $46^{ab}$ (cf. v. l. 45). — $^a$) $K_3$ $D_{2.6}$ केचिदुग्रासिना छिन्नाः; S गजास्तत्रासिना ($M_2$ °सिवि°) छिन्नाः. — $^c$) $D_{n2}$ निनेदुर्. $Ś_1$ भिन्नचर्माणो; $K_4$ छिन्नचर्माणो; S (except $T_2$ $G_3$ $M_5$) भिन्नवर्माणो (for °मर्माणो).

47 $^a$) $K_{1.3}$ $T_2$ °हस्ताच्च; $M_5$ °हस्ताश्च°. — $^b$) $K_{0-2}$ भिन्नदंतास्; $D_{7.8}$ छिन्नकुंभास्. — $D_1$ $T_2$ om. $47^{cd}$. — $^c$) $Ś_1$ $K_{0.1}$ वियोगात्; $K_2$ व्ययोधाः; $G_3$ $M_{4.5}$ वियौधाः; $C_{c.d}$ वियोधाः (as in text). — $^d$) $D_6$ नेदुर् (for जघ्नुर्). S ($T_2$ om.) मृद्नंति वरवारणाः. — $^e$) $Ś_1$ $K_1$ विनेदुर् (for निपेतुर्). $D_a$ $D_n$ $D_{4.5.7.8}$ च तदा; $D_1$ बहुधा (for च तथा). — $^f$) $Ś_1$ $K_{0-2}$ निपतंतो (for विनदन्तो). $K_{0-3.5}$ $D_{2.6}$ महारथान्; $D_1$ °गजाः. — After 47, S ins.:

171* गजांश्च गजयन्तॄंश्च गजहस्तांश्च भारत ।

[ $T_1$ $G_{2.4}$ $M_3$ °कर्तॄंश्च; $T_2$ °यंतारं (for °यन्तॄंश्च). $T_2$ चक्रहस्तांश्च (for गज°). $M_{1.2}$ मारिप (for भारत). ]

48 $^a$) $Ś_1$ $K_{0-3}$ $D_{1-3.6.8}$ छिन्नाश्च; $T_1$ G $M_{2.3}$ भिन्नांश्च; $M_5$ भिन्नाश्च; $C_d$ छिन्नांश्च (as in text). $Ś_1$ $G_2$ तोमराचापा ($G_2$ °पां); $K_{0.1}$ $D_{2.6}$ तोमराचापा (sic); $K_2$ °रां चापां; $K_3$ °राश्चापा; B $D_a$ $D_n$ $D_{4.5.7.8}$ °रान्राजन्; $D_3$ °रारावान्; $T_1$ $G_{1.3.4}$ $M_{1-3.5}$ °रा($M_2$ °रो)चापान्; $T_2$ °रप्रासान्; $M_4$ °रावासान्. — $^b$) $K_0$ सहसात्र-; $K_5$ महामात्रां; $D_3$ महामात्रान्. $C_{a.c.d}$ cite °मात्रः. — $^c$) $Ś_1$ $K_{0-3}$ $D_{1.2}$ °स्तोमा ($K_2$ °मां) विचित्राश्च; $K_5$ $B_3$ $D_{3.6}$ °स्तोमान्वि($D_6$ °मा वि)चित्रांश्च; $B_{1.2.4}$ °स्तोमान्विचित्राणि; $T_2$ °स्तोमानि छत्राणि. $C_c$ cites परिस्तोमाणि (sic); $C_d$ °स्तोमाः. — $^d$) $K_3$ D कक्षाश्च; $K_5$ वृक्षांश्च.

49 $T_1$ G om. $49^{ab}$. — $^a$) $K_5$ ग्रैवेयानथ (for °याण्यथ). $Ś_1$ $K_{0.1}$ शक्त्यश्च; $D_{a1}$ शक्तश्च; $D_{n1}$ $D_3$ शक्तींश्च; $D_6$ $M_2$ शक्तिश्च; $M_4$ शक्तिं च. — $^b$) $Ś_1$ $K_{0-2}$ पताकाः कणय($K_0$ °नका)स्तथा; $K_3$ °का कणपा°; $K_5$ $D_{2.3}$ °का कुणपा°; $D_6$ °का कणया°; $D_1$ °का पणव°; $T_2$ M °का कणयां°. — $^c$) $Ś_1$ शरीराण्यथ; $K_4$ B तूणीरानथ. $K_5$ चित्राणि; S योक्त्राणि; $C_{a.c.d}$ यन्त्राणि (as in text). — $^d$) $K_5$ अरूंषि च महात्मने.

50 $^a$) $K_2$ $B_{1.2.4}$ $D_a$ $D_n$ $D_{4.7.8}$ $C_c$ अग्निदंडानि; $K_3$ $D_{2.3.6}$ भिंडिमालानि; $K_4$ $B_3$ अंगुलित्राणि; $D_1$ अग्निवर्णानि; $D_5$ असिदंडानि (for अग्निकुण्डानि). — $^b$) $K_{1.2}$ तोत्रां चैव; $K_3$ $D_6$ तोत्राश्चैव; $B_3$ $T_1$ $G_4$ तोमरांश्च. $C_{a.d}$ cite तोत्राणि. $B_2$ [अं]कुशानि च (for [अ]ङ्कुशैः सह). $D_1$ तोत्राणि विविधानि च; $T_2$ तोत्रांश्चापांकुशैः सह. — $^c$) $K_4$ खड्गाश्च; $G_1$ घटांश्च (for घण्टाश्च). $B_{2.4}$ $D_{n2}$ $D_{4.7.8}$ $G_3$ विविधाकारा ($D_4$ °रान्); $D_a$ $D_{n1}$ $D_5$ °धा घोरा. — $^d$) $Ś_1$ हेमगर्भां; $K_{0-2}$ हंसगर्भा ($K_0$ °र्भान्); $D_{a1}$ हेमगर्भा; $D_3$ हेमगर्भाः; $T_1$ $G_4$ $M_{1.3.4}$ हेमगर्भं; $G_3$ उद्गोगर्भान्. $Ś_1$ तरूनपि; $K_3$ $D_{2.6}$ बहूनपि; $K_4$ सर्वशश्च; $K_5$ गुरूनपि; $B_2$ $D_8$ $G_1$ $M_2$ सरूनपि. $G_3$ °गर्भसरूनपि. $C_d$ cites त्सरून् (as in text). — $^e$) $K_4$ पततैः; $K_5$ $D_8$ पतंतः; $D_7$ पतिताः (for पततः). $K_3$ T G $M_2$ प($G_1$ $M_2$ पा)तितांश्चापि; $K_4$ B $D_{a2}$ पातितांश्चैव; $K_5$ $D_8$ पतिता°; $D_1$ (before corr.) पतता°. $K_0$ पतितांश्चैव पतितः. — $^f$) $B_2$ $D_{a1}$ $D_2$ $D_{4.5.7.8}$ पश्यामि; $D_6$ $G_2$ $M_{1.3.5}$ पश्याम.

51 $^a$) $Ś_1$ भिन्नगात्रा°; $D_3$ °त्रापरकरैर्; S छिन्नगात्रैश्छिन्नहस्तैर्; $C_{d.v}$ as in text. — $^b$) $D_7$ निहितैर्; $B_{2.4}$ चैव (for चापि). $D_2$ वारुणैः. S निहतैर्वरवारणैः. — $^c$) $K_3$ $B_3$ $D_{2.6}$ भूमिः; $K_4$ तत्र (for तस्मिन्).

विमृद्यैवं महानागान्ममर्दाश्वान्नरर्षभः ।
अश्वारोहवरांश्चापि पातयामास भारत ।
तद्धोरमभवद्युद्धं तस्य तेषां च भारत ॥ ५२
खलीनान्यथ योक्त्राणि कशाश्च कनकोज्ज्वलाः ।
परिस्तोमाश्च प्रासाश्च ऋष्टयश्च महाधनाः ॥ ५३
कवचान्यथ चर्माणि चित्राण्यास्तरणानि च ।
तत्र तत्रापविद्धानि व्यदृश्यन्त महाहवे ॥ ५४
प्रोथयन्त्रैर्विचित्रैश्च शस्त्रैश्च विमलैस्तथा ।
स चक्रे वसुधां कीर्णां शबलैः कुसुमैरिव ॥ ५५
आप्लुत्य रथिनः कांश्चित्परामृश्य महाबलः ।
पातयामास खड्गेन सध्वजानपि पाण्डवः ॥ ५६
मुहुरुत्पततो दिक्षु धावतश्च यशस्विनः ।

C. 6. 2296
B. 6. 54. 63
K. 6. 54. 63

---

B1.4 D (except D2.6) S रणे (T1 G4 मृधे) भूमिः (for समास्तीर्णा). K5 आशीस्तस्मिन्समाकीर्णाः. — d) K3.5 D2.6 भूधरैर्; B Da Dn1 D3.5.7.8 S पर्वतैर्; D1 भुजगैर् (for भूनगैर्). Dn2 D4 पर्वतैः पतितैरिव.

52 a) K0 Da1 D1.4.7 विमृद्यैव; K3 विमृद्येवं; B3 विसृत्यैवं; B4 विसृज्यैवं; D2 विमृश्यैवं; D8 विमृद्य च; T2 विद्रिये च (for विमृद्यैवं). S तथा नागान् (G3 °गं). — b) K0 संमर्द्याश्वान्; K3 D2.6 समर्दान्यान्; D1 ममर्द च (for ममर्दाश्वान्). K3 D2.3.6 महाबलः; K4 Da1 D4.5.7.8 नरर्षभ. Ś1 मदाश्वान्भरतर्षभ; K1 संमर्द्यामनुरर्षभः (sic.). — c) Ś1 K1 D8 अश्वरोहवरांश्; K5 M1.2 अश्वारोहान्व(M1 °न्न)रांश्; B2 अश्वारोहवलांश्; Da1 अश्वरोहावराश्. K0.5 Da1 चैव (for चापि). — d) K1 पत°; M3-5 घात° (for पात°). K3 D2.6 संयुगे (for भारत). — Ś1 om. (hapl.) 52ef. — e) K5 Dn2 D4.7 transp. घोरं and युद्धं. — f) B1.2.4 Dn2 D4.7.8 तत्र (for तस्य). B D (except D1.2.6) मारिष (for भारत).

53 a) T2 कवचान्यथ; M3.5 बलिनां चाथ; M4 सजिनान्यथ (for खलीनान्यथ). Ca.c.d.v cite खलीनानि (as in text). K4 Da Dn1 D3.5 T G M4 Cv चित्राणि; M1.2 शस्त्राणि; Cc.d योक्त्राणि (as in text). B Dn2 D4.7.8 खलीनानि विचित्राणि. — b) K0-2 वृषाश्च; K4 B1.2 कक्ष्याश्च; B3.4 Da Dn D4.5.7.8 कक्षाश्च (for कशाश्च). Ca cites कक्ष्या[:]. — c) B2 Da Dn1 D5 परिस्तोमानि प्रासाश्च; Dn2 D4.7.8 °मानि यंत्राश्च; D1 °मास्तथा प्रासा. — d) K1 ऋषयश्च; K3 D2.6 T2 G3 यष्टयश्च; K5 शक्तयश्च; Da2 D5 हृष्टयश्च; G1 अष्टयश्च. Cd cites रिष्टयः. D8 महाबलाः; Co.d महाधनाः (as in text).

54 a) K4 वर्षाणि; K5 वर्माणि; T G चित्राणि (for चर्माणि). — b) Ca आस्तार°; Cc आस्ताराणि; Cd आस्तर° (as in text). Ś1 चित्राण्य*रणानि च; K0.1 विचित्राण्यस्त्व(K0 °ण्यंब)राणि च; K3 विचित्राण्यंवरानि च; D1 चित्राण्यस्त्रवराणि च; T2 छत्राण्याभरणानि च. — c) T1 G तत्रापविद्धान्येतानि; T2 तत्रोपविद्धापहतान्; M1.3.5 तत्रापविद्धानि रणे. — d) B1 महीतले (for महाहवे). T1 G M पश्यामस्तत्र (M2 रणे पश्याम) संघशः.

55 a) K3 D2.6 प्रासयंत्रैर्; K4 प्रासैर्यंत्रैर्; B1.2 योधयंत्रैर्; B3 प्रोथयन्स-; D1 कूथायंत्रैर्; Cc प्रोथतंत्रैः; Cd प्रोथयत्रैर् (as in text). K1 च शस्त्रैश्च; Dn2 D4 च चित्रैश्च; D3 तथा चित्रैः (for विचित्रैश्च). K5 प्रोथयंश्चैव विविधैः; S चकर्त रथचक्रां(M1.2.4 °नीलां-; M3.5 °नागां)श्च. — b) B2 शंखैश्च; B4 Dn2 D4.7.8 खड्गैश्च; D5 शनैश्च (for शस्त्रैश्च). T1 G4 रथनीलांस्तथाभिभूः; T2 G1-3 रथनीडां(T2 °चक्रां-; G2 °क्रीडां)श्च चाभिभूः; M रथचक्राणि चाभिभूः. — c) S तैः कीर्णां वसुधां चक्रे. — d) K4 B Da1 Dn D4.5.7.8 S Cd शबलां; D1 सबलां; D6 सबलौ; Cc सबलं (for शबलैः). B Dn2 D4.7.8 कुमुदैरिव (for कुसुमै°). K0 अपि (for इव).

56 a) D1 आवृत्य. — After 56a, G3 ins.:

172* आक्षिप्यान्यान्यपातयत् ।
खड्गेनान्यांश्च चिच्छेद.

— b) Ś1 K0-2.5 Da Dn D4 परामृष्य; D2 परामृशन्; Cc.d परामृश्य (as in text). T1 G महारथः (for °बलः). — c) T2 छेद° (for पात°). — d) B3 सभुजानपि; T1 G2-4 ध्वजानपि स; T2 ध्वजांश्चैव स (for सध्वजानपि).

57 a) Ś1 उत्पत्यतो; Da2 M2.4 उत्पतितो. — b) Ś1 K1 वातवश्च; K0 वा**श्च; K3 (by metathesis) धातवश्च; D3 पादातेश्च. Dn2 D4.7.8 तर° (for यश°). — c) Dn2 समार्गांश् (for मार्गांश्च). D8 चरतांश्. K3 B D2.6 चित्रं. D3 मार्गांश्चरतश्चित्रांश्च. — d) K1.2 T विस्मयंत.

C. 6. 2297
B. 6. 54. 64
K. 6. 54. 64

मार्गांश्च चरतश्चित्रान्व्यसयन्त रणे जनाः ॥ ५७
निजघान पदा कांश्चिदाक्षिप्यान्यानपोथयत् ।
खड्गेनान्यांश्च चिच्छेद नादेनान्यांश्च भीषयन् ॥ ५८
ऊरुवेगेन चाप्यन्यान्पातयामास भूतले ।
अपरे चैनमालोक्य भयात्पञ्चत्वमागताः ॥ ५९
एवं सा बहुला सेना कलिङ्गानां तरस्विनाम् ।
परिवार्य रणे भीष्मं भीमसेनमुपाद्रवत् ॥ ६०
ततः कलिङ्गसैन्यानां प्रमुखे भरतर्षभ ।
श्रुतायुषमभिप्रेक्ष्य भीमसेनः समभ्ययात् ॥ ६१
तमायान्तमभिप्रेक्ष्य कलिङ्गो नवभिः शरैः ।
भीमसेनममेयात्मा प्रत्यविध्यत्स्तनान्तरे ॥ ६२
कलिङ्गबाणाभिहतस्तोत्रार्दित इव द्विपः ।
भीमसेनः प्रजज्वाल क्रोधेनाग्निरिवेन्धनैः ॥ ६३
अथाशोकः समादाय रथं हेमपरिष्कृतम् ।
भीमं संपादयामास रथेन रथसारथिः ॥ ६४
तमारुह्य रथं तूर्णं कौन्तेयः शत्रुसूदनः ।
कलिङ्गमभिदुद्राव तिष्ठ तिष्ठेति चाब्रवीत् ॥ ६५
ततः श्रुतायुर्बलवान्भीमाय निशिताञ्शरान् ।

---

58 [a]) K3 D2.6 स जघान. Ś1 पताकांश्च; K0–2 D1 पदातींश्च; K5 D3 पदातांश्च; T1 G1.2.4 M1.2.4 तदा कांश्चिद्. — [b]) K0.2 [अ]प्याक्षिप्य; K3.4 B D2 G1 व्याक्षिप्य; Cc आक्षिप्य (as in text). D3 व्यपोथ°; T1 G1.3.4 M अपात°; Cc अपोथ° (as in text). K5 आक्षिप्यान्यानि पोथयत्; T2 तलेनैव व्यपोथ°; G2 कांश्चिदाक्षिप्य पातयत्. — [c]) K1.2 खड्गेनान्यं च; K2 °नान्याश्च; K3 °नाश्वांश्च; T1 G2.4 M2.5 खड्गैरन्यांश्च. — [d]) K0–2 पादेनान्यांश्च; D1 दृष्ट्वा चान्यांश्च; T G2.4 M नादैरन्यांश्च. K4 B1.3.4 Da Dn D4.5.7.8 नादैरन्यान( Dn2 °न्य )भीषयत्; B2 नादेनान्यानविभीषयत् (hypermetric).

59 [a]) K3.5 Da Dn2 D6 उरुवेगेन. M चान्यान्स (for चाप्यन्यान्). — [c]) G2 अथान्ये (for अपरे). K2 Da1 D5.8 चैवम्. D1 अपरे च समालोक्य. — [d]) B Da Dn D4.5.7.8 भयाद्विद्राविणोभवन्; D1 भयाद्विप्राणिनोभुवन्.

60 [a]) S एवं स बहुलां ( M4 °वं बहुविधां ) सेनां. — [b]) Da1 कलिंपगानां; D5 कलिपतानां. — [c]) D2 परिसृप्य. K0–2 तेन; D1 राजन् (for भीष्मं). S विनिघ्नन्व्यचरद्भीमो. — [d]) Ś1 K3 D3.6 अभि° (for उपा°). K0–2 भीमेन समभिद्रुतः ( K0 °ता ); K5 D2 °सेनो ह्यभिद्रवत्; D1 भीमसेनमथार्दयन्; S युगांताग्निरिवाहवे.

61 [a]) D (except D1–3.6) ततः कलिंग( Da °गः )-सेनां तां. — [b]) G1 प्रमुखं. D1 भरतोत्तम. — [c]) Ś1 K1 शता° (for श्रुता°). K1 °प्रेख्य; K5 G2 °प्रेत्य. — K5 om. (? hapl.) 61[d]–62[c]. G3 om. (hapl.) 61[d]–62[a]. — [d]) D1 समभ्यगात्; G1 M1.2 तमभ्ययात्; Cc समभ्ययात् (as in text).

62 K5 om. 62[abc]; G3 om. 62[a] (cf. v. l. 61). — [b]) K4 B Da Dn D4.5.7 M3–5 कालिंगो. B1 बहुभिः (for नवभिः). — [d]) K2.3 D5 प्रत्यविध्य; K5 अविध्यत; M3 प्रत्यविध्यन्.

63 [a]) K4 B Da Dn D4–7 कालिंगबाणाभिह( Da1 Dn1 °णाभिभू-; Dn2 °णनिह )तस्. — [b]) M2.5 °र्दित (for °र्दित). D1 इति (for इव). — [d]) T1 G कोपेन (for क्रोधेन). K0–3 D3 G1 M2.5 इवैधितः; K4 इवोद्धृतः; K5 D2.6 M1.3 इवेधितः; D1 T2 G3 इवोत्थितः; T1 G2.4 M4 इवेरितः (for इवेन्धनैः).

64 [a]) K0 अथाशोकं; K3 यथाशोकः; B3 तथा°; Cv अथा° (as in text). D1.3 S विशोकस्तु ततो राजन् ( D1.3 °स्तु रथं तूर्णं ). — [b]) K3.5 Da Dn D2.5–7 °परिस्कृतं. D1.3 S योजयित्वा महारथं ( D1 °त्वा महाजवं; M1.2.4.5 °त्वास्मवान्प्रभो; M3 °त्वा महाबलः ). — [c]) K3 D2.6 रथं (for भीमं). Ś1 समादया°; S (except M1.2) संपात°; Cc संपाद° (as in text). — [d]) K0–2 सरथं; K3 D2.6 भीमस्य (for रथेन). K4 B1–3 Da D3.5 S रथिनां वरं; B4 Dn D4.7.8 रथिनां वरः (for रथसारथिः).

65 [a]) Ś1 K0–2 तमारूढो; D2 समारुह्य; G3 तदारुह्य. — [c]) K0.1.4 B Da Dn D4.7 M4 कालिंगद-

66 [a]) T G4 तत्र (for ततः). Ś1 शतायुर्. — [b]) Ś1 B2 D (except D1.2.6) भीमस्य (for भीमाय). [अ]त्रासृजन्; K0–2.5 [अ]वसृजन्; K3 D2.6 व्यसृजन् S इषून् (for निशितान्). — [d]) B Da Dn D4.5.7.8

प्रेषयामास संक्रुद्धो दर्शयन्पाणिलाघवम् ॥ ६६
स कार्मुकवरोत्सृष्टैर्नवभिर्निशितैः शरैः ।
समाहतो भृशं राजन्कलिङ्गेन महायशाः ।
संचुक्रुधे भृशं भीमो दण्डाहत इवोरगः ॥ ६७
क्रुद्धश्च चापमायम्य बलवद्बलिनां वरः ।
कलिङ्गमवधीत्पार्थो भीमः सप्तभिरायसैः ॥ ६८
क्षुराभ्यां चक्ररक्षौ च कलिङ्गस्य महाबलौ ।
सत्यदेवं च सत्यं च प्राहिणोद्यमसादनम् ॥ ६९
ततः पुनरमेयात्मा नाराचैर्निशितैस्त्रिभिः ।
केतुमन्तं रणे भीमोऽगमयद्यमसादनम् ॥ ७०
ततः कलिङ्गाः संक्रुद्धा भीमसेनममर्षणम् ।
अनीकैर्बहुसाहस्रैः क्षत्रियाः समवारयन् ॥ ७१
ततः शक्तिगदाखड्गतोमरर्ष्टिपरश्वधैः ।
कलिङ्गाश्च ततो राजन्भीमसेनमवाकिरन् ॥ ७२
संनिवार्य स तां घोरां शरवृष्टिं समुत्थिताम् ।
गदामादाय तरसा परिप्लुत्य महाबलः ।

C. 6. 2313
B. 6. 54. 80
K. 6. 54. 80

---

(T2 अस्त्र )लाघवं ( for पाणि° ).

67 a) Ko–2 स कार्मुकरथो हृष्टो ; S स ( G3 स्व- ) कार्मुकच्युतैर्बा( G2 °तो बा )णैः. — b) K1 D1 निशतैः. S स्वर्णपुंखैर्महाहवे ( T1 G °मृधे ). — K5 om. $67^c$–$70^b$. — c) K8 D1. 2. 6 महाराज ; B1–3 महाराजन् ( for भृशं राजन् ). D3 कलिंगेन शरैः पार्थो ; S कलिंगेन तदा भीमो ( T1 तथा भीमो ; G1 महाभीमो ; M1. 2 तदा विद्धो ). — d) K4 B Da Dn1 D5 कालिंगेन. K3 D2. 6 महात्मना ; K4 B Da Dn D1. 4. 5. 7. 8 महाबलः (for महायशाः ). D3 मर्मभेदिभिराशुगैः ; S विद्धः (M1. 2 भीमः ) सप्तभिराशुगैः. — e) Ko–2 Dn2 D3. 4. 7 T G2. 4 M1–3 संचुक्रोध ; B1. 2 Da Dn1 D5 G1. 3 °कोप ; B3. 4 D2 °क्रुशे ; D1 ततः क्रुद्धो ; D8 M4. 5 संचुक्रोश. S ( except M3. 4 ) तदा ( for भृशं ). Ko–2 क्रुद्धो ( for भीमो ). — f) M5 दंडहस्त ( for दण्डाहत ). T1 -महोरगः.

68 K5 om. 68 ( cf. v. l. 67 ). — a) K4 B Da2 Dn2 D4. 5. 7. 8 T G M4. 5 क्रुद्धः स ; D1 M1. 2 क्रुद्धस्तु. Ś1 चापमाकृष्य ; Ko °मायस्य ; B °मानस्य ; Da Dn1 D5 M3–5 °मादाय. Cc cites आयम्य ( as in text ). — b) M3–5 बलेन ( for बलवद् ). — c) K4 B Da Dn1 D4. 5. 7. 8 M3 कालिंगम्. — d) D1 T G °भिराशुगैः.

69 K5 om. 69 (cf. v. l. 67 ). — a) Ko–2 शराभ्यां (for क्षुराभ्यां ). D1 S तु ( for च ). — b) K4 B1. 3. 4 Da Dn D4. 7. 8 G1 कालिंगस्य. D1 T1 G2. 4 महाबलः ; G1. 3 महात्मनः ; M1. 2 °रथौ. — c) G1. 2 सत्यदैवं. — d) K1 यमसाधनं ; Cc °सादनम् ( as in text ).

70 Ko–2 D2 om. ( hapl. ) 70. K5 om. $70^{ab}$ ( cf. v. l. 67 ). — b) D8 नरान्वै ( for नाराचैर् ). T G नाराचैश्च त्रिभिः पुनः. — T G om. ( hapl. ) $70^c$–$75^b$. — d) K3 D6 ( with hiatus ) अनयद् ( for ऽगमयद् ). K3 °साधनं. D1 गमयामास मृत्यवे.

71 T G om. 71 ( cf. v. l. 70 ). — a) Ś1 Ko–2. 5 M4 ततः कलिंगः संक्रुद्धो. — K5 om. $71^c$–$72^b$. — c) Ko–2 B2 Dn2 D5. 8 अनेकैर्. M अनेकशतसाहस्राः. — d) Ko–2 D1 क्षत्रियैः ; M समंतात् ( for क्षत्रियाः ). Ko–2 समवारयत् ; K3 °वाकिरन् ; B Da Dn D4. 6. 7. 8 °योधयन् ; D1 M पर्यवारयन्.

72 K3 ( hapl. ) T G om. 72 ( for T G, cf. v. l. 70 ). K5 om. $72^{ab}$ ( cf. v. l. 71 ). — a) D1 °खड्गैस् ( for °खड्ग- ). — b) D1 M -तोमरासिपरश्वधैः. A few MSS. °परस्वधैः. — c) Ko–2 D6 कलिंगास्. K4. 5 B Da Dn D3–5. 7. 8 M शतशो ; D1 समरे ( for च ततो ). — d) Ko. 1 अवाकिरत् ; B Dn2 D4. 7. 8 M4 अवारयन् ; Da Dn1 D5 उपाद्रवन्.

73 T G om. 73 ( cf. v. l. 70 ). — a) Ko–3 D1. 2 स निवार्य ; D6 नविचार्य ; M समवार्य ( for संनि° ). B Da Dn D4. 5. 7. 8 तु तां ; D1 ततो ; D3 M च तां ( M1 तान् ) ( for स तां ). K1 घोरं ; B Da Dn D4. 5. 7. 8 राजन् ; D1 घोरान् ; D3 M वीरः ( for घोरां ). — b) Ko शरवृष्टि- ; Da Dn1 M शस्त्रवृष्टिं ; D1 शरवृष्ट्या. K1 Da1 समुत्थितं ; K5 Dn D3. 4. 7. 8 समुच्छ्रितां ; B3 स सायकैः ; D1 दुरासदान् ; M दुरासदां ( for समुत्थिताम् ). — c) M1. 2 तान्सर्वान् ( for तरसा ). — d) Ś1 Ko. 1 D3 परिपत्य ; K3 D2. 6 संनिवार्य ; K5 संनिपत्य ; M परिवृत्य ( for परिप्लुत्य ). K3 महारथः. D1 अवप्लुत्य रथाद्बली. — After $73^{cd}$, D1 ins. :

C. 6. 2314
B. 6. 54. 81
K. 6. 54. 81

भीमः सप्तशतान्वीराननयद्यमसादनम् ॥ ७३
पुनश्चैव द्विसाहस्रान्कलिङ्गानरिमर्दनः ।
प्राहिणोन्मृत्युलोकाय तदद्भुतमिवाभवत् ॥ ७४
एवं स तान्यनीकानि कलिङ्गानां पुनः पुनः ।
विभेद समरे वीरः प्रेक्ष्य भीष्मं महाव्रतम् ॥ ७५
हतारोहाश्च मातङ्गाः पाण्डवेन महात्मना ।
विप्रजग्मुरनीकेषु मेघा वातहता इव ।
मृद्नन्तः स्वान्यनीकानि विनदन्तः शरातुराः ॥ ७६
ततो भीमो महाबाहुः शङ्खं प्राध्मापयद्बली ।
सर्वकालिङ्गसैन्यानां मनांसि समकम्पयत् ॥ ७७
मोहश्चापि कलिङ्गानामाविवेश परंतप ।
प्राकम्पन्त च सैन्यानि वाहनानि च सर्वशः ॥ ७८
भीमेन समरे राजन्गजेन्द्रेणेव सर्वतः ।
मार्गान्बहून्विचरता धावता च ततस्ततः ।

---

173* पपात शत्रुसैन्येषु केसरीव महाबलः ।

— $^{e}$) K4 D1 योधान् ( for वीरान् ). — $^{f}$) D3 नान° ( for अन° ).

74 T G om. 74 ( cf. v. l. 70 ). — $^{b}$) D4. 7 कालिंगान्. K2 परिमर्दनः ( for अरि° ). — $^{c}$) M1. 2. 4. 5 यमलोकाय ( for मृत्यु° ). — $^{d}$) K3 तदद्भूतम्. — After 74, D1 ins.:

174* गदया मुक्तया राजन्पातयामास दन्तिनः ।
तथा गजं गजेनैव प्राहिणोद्यमसादनम् ।
रथं रथेन संचूर्ण्य तुरङ्गं तुरगेण तु ।
पदातिनं पदातेन प्रेषयामास मृत्यवे ।
पुनरश्वेषु पतति गजेषु च पुनः पुनः । [5]
रथेषु स पदातेषु वायुनेव महानलः ।
यथा मृगाणां मध्ये तु केसरीव नखग्रहः ।
एवं भ्रमति सैन्येषु भीमकर्मा वृकोदरः ।

75 T G om. 75$^{ab}$ ( cf. v. l. 70 ). — $^{a}$) M ततः ( for एवं ). K5 सर्वान्य°; Da Dn D1. 5 शतान्य° ( for स तान्य° ). — Ko. 1 om. ( hapl. ) 75$^{b}$–76$^{e}$. — $^{b}$) D1 समंततः ( for पुनः पुनः ). K2 व्यमर्दत महाबलः. — $^{c}$) Ś1 K5 पार्थः; K3 D2. 6 तूर्णं; D1 राजन्; M1. 3–5 वीरं ( for वीरः ). — $^{d}$) S ( except M4 ) भीमः ( for भीष्मं ). K3 D2. 6 M5 महारथं; T1 G समाप्लुतं; M1–3 महाबलः ( for °व्रतम् ). K2. 4 B Da Dn D4. 5. 7. 8 भीमो भीमपराक्रमः; K5 भीष्मं प्रेक्ष्य महानत्तं; D1 भीमसेनो महाबलः.

76 Ko. 1 om. 76$^{abcde}$ ( cf. v. l. 75 ). — $^{a}$) D1 हस्त्यारोहाः समातंगाः. — $^{b}$) K2 B1. 2. 4 Da Dn D4. 5. 7 कृता रणे; K4 D3 महारणे; B3 हवा रणे ( for महात्मना ). — $^{d}$) K2 D ( except D2. 6 ) S घना ( for मेघा ). K3 Da Dn D5 M वाताहता इव; K5 वात इवाहताः; G3 वातेरिता इव ( for वातहता इव ). — D3 om. 76$^{ef}$. — $^{e}$) D5 मृदंगः; D6 मर्दंतः ( for मृद्नन्तः ); T G मृद्नं ( T2 त्रसं°; G2 मह )तः स्वंदनानीकान्. — $^{f}$) K4 शराहताः; Da1 शरातुगः; D1 च सातुराः. K... व्य( K1 वि )मर्दत महाबलः. — After 76, D1 ins.:

175* भ्रमन्ति तत्र तत्रैव काल्यमाना महात्मना ।

77 K2 om. 77–84. — $^{a}$) T1 G महेष्वासः; ... महाघोरं; M महाघोषं ( for महाबाहुः ). — After 77$^{a}$, N ( K2 om. ) ins.:

176* खड्गासक्तमहाभुजः ।
संप्रहृष्टो महाघोषं

[ ( L. 1 ) K3. 5 B2–4 D2. 6 खड्गहस्तो; Da1 D... खड्गसक्त°; D3 खड्गशक्तो ( for खड्गासक्त° ). D1 ... शत्रून्रणाजिरे. — ( L. 2 ) Dn2 D3. 7. 8 महाघोरं ( for °घोषं ). D1 सिंहनादं मुहुः कृत्वा. ]

— $^{b}$) Ko. 1. 3. 5 Da Dn D5. 8 प्रध्मापयद् ( Dn1 ... D4 प्राध्मापयन्. D1 शंखं दध्मौ प्रतापवान् ( = 6. ... 12$^{d}$ ); S शंखं दध्मौ महाबलः. — $^{c}$) Ś1 °कलिंग°; M2 °योधानां ( for °सैन्यानां ). — $^{d}$) Da1 D... G1. 3. 4 M5 समकंपयन्. — After 77, D1 ins.:

177* भीमेन सहसा राजन्भ्रममाणेन संयुगे ।

78 K2 om. 78 ( cf. v. l. 77 ). D1 om. 78$^{a}$–79... — $^{a}$) D3 S ( except M3 ) मोहस्तेन ( for श्चापि ). K... — $^{b}$) Da1 T2 °तपः. — $^{c}$) Ko प्राकंपत च; ... अकंपस्तव; Da Dn1 D3. 5 प्राकंपयंत ( for प्राकम्पन्त च ). — $^{d}$) B1. 2. ... S प्रचकंपे च तत्सै( M1. 2 °पे ततः सै )न्यं. — ... Dn2 D4. 7. 8 च सुस्रुवुः; B3 Da Dn1 D5 प्रसुस्रुवुः; S च भारत ( for च सर्वशः ). Cc cites सुस्रुवुः.

79 K2 om. 79 ( cf. v. l. 77 ). D1. 3 S om. 79... ( for D1, cf. v. l. 78 ). — $^{b}$) K5 गजेंद्रेणैव. Ś... K4. 5 B1–3 D6 पर्वतः; Ko. 1 पर्वते; K3 D2 सर्वतः ( for सर्वतः ). D8 गर्जनेन च सर्वशः. — $^{c}$) Da1 D...

मुहुरुत्पतता चैव संमोहः समजायत ॥ ७९
भीमसेनभयत्रस्तं सैन्यं च समकम्पत ।
क्षोभ्यमाणमसंबाधं ग्राहेणेव महत्सरः ॥ ८०
त्रासितेषु च वीरेषु भीमेनाद्भुतकर्मणा ।
पुनरावर्तमानेषु विद्रवत्सु च संघशः ॥ ८१
सर्वकालिङ्गयोधेषु पाण्डूनां ध्वजिनीपतिः ।
अब्रवीत्स्वान्यनीकानि युध्यध्वमिति पार्षतः ॥ ८२
सेनापतिवचः श्रुत्वा शिखण्डिप्रमुखा गणाः ।
भीममेवाभ्यवर्तन्त रथानीकैः प्रहारिभिः ॥ ८३
धर्मराजश्च तान्सर्वानुपजग्राह पाण्डवः ।
महता मेघवर्णेन नागानीकेन पृष्ठतः ॥ ८४
एवं संचोद्य सर्वाणि स्वान्यनीकानि पार्षतः ।
भीमसेनस्य जग्राह पार्ष्णिं सत्पुरुषोचिताम् ॥ ८५
न हि पाञ्चालराजस्य लोके कश्चन विद्यते ।
भीमसात्यकयोरन्यः प्राणेभ्यः प्रियकृत्तमः ॥ ८६
सोऽपश्यत्तं कलिङ्गेषु चरन्तमरिसूदनम् ।

C. 6. 2329
B. 6. 54. 96
K. 6. 54. 96

---

बहु ( for बहून् ). $D_1$ मार्गा बहुविधा सैन्ये ; $D_3$ M मार्गांश्च चरत( $T_2$ सरथ )श्चित्रान् ; $T_1$ G मार्गान्विचरत- श्चित्रान्. —$^{d}$) $K_{0.1}$ धावतश्च. $D_1$ कृतप्रतिकृतैः कृताः ; $D_3$ S धावतश्च ( $T_2$ ध्वजं चैव ) यशस्विनः. —$^{e}$) $D_6$ बहुर् ( for मुहुर् ). $K_5$ मुरुच्चत्पतनाच्चैव (sic); $D_3$ मुहु- रुत्पततश्चैव ; S मुहुश्चोत्पततो दिक्षु. —$^{f}$) $K_3$ $B_4$ $D_{2.6}$ समपद्यत ; $D_7$ सह जायते ; Cc परिजायते. $D_3$ S व्य- ( $D_3$ by corr. वा )स्मयंत रणे जनाः. — For $79^{ef}$, $D_1$ subst. :

178* धावता हस्तिमार्गेषु मुहुरापतता पुनः ।
कलिङ्गानां ससैन्यानां संमोहः समजायत ।

80 $K_2$ om. 80 ( cf. v. l. 77 ). —$^{a}$) S हन्यमानं (for भीमसेन- ). Ko -भयात्रस्तं. —$^{b}$) $B_{1.4}$ Da Dn $D_{4.5.7.8}$ S सैन्यं तत् ; $D_{1.3}$ तत्सैन्यं ( for सैन्यं च ). —$^{c}$) Ko असंबाध- ; $M_1$ °बाधे ; Cc °बाधं ( as in text ). $D_1$ ताड्यमानमसंख्येयं ; $D_5$ क्षोभयामास संबाधं ; $T_1$ G क्षोभ्यमाणं महत्सैन्यं. —$^{d}$) $D_1$ गजेनेव ; $D_3$ $T_2$ $G_2$ ग्राहेणैव. $Dn_2$ $D_{1.4.7}$ महासरः.

81 $K_2$ om. 81 ( cf. v. l. 77 ). —$^{a}$) Da $Dn_1$ $D_5$ [त्र]थ ; $D_3$ $T_1$ G $M_{3-5}$ तु ( for च ). $K_3$ $B_3$ $D_{2.6}$ सर्वेषु ; $D_3$ S सैन्येषु ( for वीरेषु ). $B_1$ संत्रा- सितेषु वीरेषु. —$^{d}$) B Da Dn $D_{4.5.7.8}$ S समंततः; $D_1$ सहस्रशः ; $D_3$ च सर्वशः ( for च संघशः ).

82 $K_2$ om. 82 ( cf. v. l. 77 ). —$^{a}$) $K_5$ पूर्वं (for सर्व- ). $D_1$ °पादेषु ; $T_1$ $G_4$ °सैन्येषु ( for °योधेषु ). —$^{b}$) $B_{1.2}$ वाहिनी° ; $Da_2$ $D_8$ ध्वजनी°. —$^{c}$) B D (except $D_{1.3.6}$ ) अवादीत् ( for अब्रवीत् ). $D_3$ स्वानि सैन्यानि. —$^{d}$) $K_4$ B D ( except $D_{1-3.6}$ ) भारत ; S मारिष ( for पार्षतः ).

83 $K_2$ om. 83 ( cf. v. l. 77 ). —$^{a}$) $Ś_1$ $K_{0.1}$ सेनापतिमतं ; $B_{2.4}$ D ( except $D_{1-3.6}$ ) °पतेर्वचः. —$^{b}$) $K_5$ $Da_1$ $D_5$ $G_2$ शिखंडी-. $K_{0.1}$ ततः ; $D_3$ S रथाः ( for गणाः ). $D_6$ ( m as in text ) शिखंडीप्रमुखा नृपाः. —$^{c}$) $K_{0.1.5}$ $B_{1.4}$ D ( except $D_6$ ; $D_2$ marg. *sec. m.* ) भीष्मम् ( for भीमम् ). Ko अभ्यवर्तत ; $K_5$ अभिवर्तंत. —$^{d}$) $D_3$ $T_2$ प्रहारिणः.

84 $K_2$ om. 84 ( cf. v. l. 77 ). —$^{a}$) $T_2$ पार्थैः ( for सर्वान् ). —$^{b}$) S पालयन्पृष्ठतोन्वगा( $M_1$ °या )त्. —$^{c}$) S मेघ( $M_2$ रथ )घोषेण. —$^{d}$) $D_6$ नागानीकेषु. S गजा( $M_1$ रथा- ; $M_2$ तथा )नीकेन दंसितः.

85 $^{a}$) $Ś_1$ $K_{0-2}$ संछाद्य ; $K_3$ $D_{2.6}$ संनोद्य ; $K_4$ संदिश्य ; $K_5$ संबोध्य ( for संचोद्य ). $D_1$ योधांस्तु ( for सर्वाणि ). S सर्वसैन्यानि संचोद्य. —$^{b}$) $D_1$ राजन्सा- त्यकिपार्षतौ ; S धृष्टद्युम्नो महाबलः. —$^{c}$) $D_1$ रक्षार्थं ; Cc जग्राह ( as in text ). —$^{d}$) $K_5$ पार्णिं सत्पुरुपो- चितं ; B Da Dn $D_{4.5.7.8}$ पार्ष्णिं सत्पुरुषैर्वृतः ; $D_1$ जग्मतुस्त्वरितौ नृप ; S पार्ष्णिं सत्पु( $G_{1-3}$ °र्ष्णान्स्वपु- ; $M_2$ °ष्णिं स्वपु )रुषैः सह.

86 $^{a}$) $K_{0-2}$ $D_2$ पंचाल° ; $D_1$ S °पुत्रस्य. —$^{c}$) $D_3$ प्रियः सात्यकिभीमाभ्याम् ; $D_6$ न भीमसात्यकोरन्यः ; $T_1$ G M भीमशै( $M_1$ °सै )नेययोरन्यो ; $T_2$ भीमसेनसमो वीरो. —$^{d}$) $D_3$ अन्यः पुरुषसत्तमः ; S नरः प्रियतरो ( $T_2$ M °मो ) भुवि.

87 $^{a}$) $K_2$ Da Dn $D_{1.3-5.7.8}$ सोपश्यत ; $K_3$ $B_{1.2}$ $D_{2.6}$ सोपश्यच्च ; $K_4$ $B_4$ सोपश्यत् ( submetrial ); $K_5$ सोपश्चाच्च (sic); S स तं पश्यन्. — $T_2$ om. $87^{b}$–$89^{c}$. —$^{b}$) $K_{0-2}$ $D_{1.3}$ अरिमर्दनं. —$^{c}$) $M_2$ महाबाहुः.

88 $T_2$ om. 88 ( cf. v. l. 87 ). —$^{a}$) $K_{0-2.5}$ D ( except $D_{2.3.6}$ ) $M_5$ ननंद ( for ननर्द ). $D_3$ S ( $T_2$

C. 6. 2561
B. 6. 59. 54
K. 6. 59. 54

ततः पार्थो धनुर्गृह्य दिव्यं जलदनिस्वनम् ।
पातयामास भीष्मस्य धनुश्छित्त्वा त्रिभिः शरैः ॥ ५२
स च्छिन्नधन्वा कौरव्यः पुनरन्यन्महद्धनुः ।
निमेषान्तरमात्रेण सज्यं चक्रे पिता तव ॥ ५३
विचकर्ष ततो दोर्भ्यां धनुर्जलदनिस्वनम् ।
अथास्य तदपि क्रुद्धश्चिच्छेद धनुरर्जुनः ॥ ५४
तस्य तत्पूजयामास लाघवं शंतनोः सुतः ।
साधु पार्थ महाबाहो साधु भो पाण्डुनन्दन ॥ ५५
त्वय्येवैतद्युक्तरूपं महत्कर्म धनंजय ।
प्रीतोऽस्मि सुदृढं पुत्र कुरु युद्धं मया सह ॥ ५६
इति पार्थं प्रशस्याथ प्रगृह्यान्यन्महद्धनुः ।
मुमोच समरे वीरः शरान्पार्थरथं प्रति ॥ ५७
अदर्शयद्वासुदेवो हययाने परं बलम् ।
मोघान्कुर्वञ्शरांस्तस्य मण्डलान्यचरल्लघु ॥ ५८
तथापि भीष्मः सुदृढं वासुदेवधनंजयौ ।
विव्याध निशितैर्बाणैः सर्वगात्रेषु मारिष ॥ ५९
शुशुभाते नरव्याघ्रौ तौ भीष्मशरविक्षतौ ।
गोवृषाविव नर्दन्तौ विषाणोल्लिखिताङ्कितौ ॥ ६०
पुनश्चापि सुसंक्रुद्धः शरैः संनतपर्वभिः ।
कृष्णयोर्युधि संरब्धो भीष्मो व्यावारयद्दिशः ॥ ६१

---

52 = ( var. ) 6. 102. 43. — [a] ) S ततोर्जुनो ( for ततः पार्थो ). — [b] ) A few MSS. °निःस्वनं. — [d] ) B3. 4 D ( except D1–3. 6 ) S शितैः ( for त्रिभिः ).

53 = 6. 102. 44. — [a] ) T1 ( before corr. ). 2 G1. 4 M सं· ( for स ). K3 Da1 D3–5. 7. 8 कौरव्य. — [b] ) G2. 3 °रन्यं. K1 महद्भुवः; K5 महाधनुः. — [c] ) K1. 4. 5 B1. 3. 4 Dn1 D1. 3. 6. 8 ( before corr. ) निमिषांतर°; T1 G2. 4 क्षिप्रमादाय तद्राजन्. — [d] ) Ś1 K3–5 B Da2 Dn2 D1–5 T1 G4 सज्जं. K3. 5 D2. 6 कृत्वा ( for चक्रे ).

54 = 6. 102. 45. — [a] ) Ś1 K1 विचकर्षंस; Da1 विकीर्षत. — [b] ) T G M4 धनुस्तज्जलदस्वनं. — [d] ) K3 D2 पुनरर्जुनः; D6 ** चार्जुनः. K5 धनुश्चिच्छेद चार्जुनः.

55 = ( var. ) 6. 102. 46. — [a] ) K1 प्रज° ( for पूज° ). — [b] ) Ś1 ( before corr. ) K4 B Da Dn D5. 7 शांतनोः. — [d] ) Ko B3 Da Dn D4. 7 भोः. K4 S साधु पांडवनंदन.

56 [a] ) Ś1 त्वय्येव रूपसंयुक्तं; Ko. 2 M2. 5 त्वय्यैवैतद्युक्तरूपं; G3 त्वय्येमेव तद्युक्तरूपं ( sic ). — [c] ) S प्रीतोस्मि ते भृशं ( G3 तेनिशं ) पार्थ.

57 [a] ) Ś1 Ko–2 Da2 D1. 2. 6 प्रशंस्याथ. — [b] ) Ś1 प्रगृह्यार्थं; K3 D2 प्रतिगृह्य; D3 G3 प्रगृह्यान्यं; T2 प्रसह्यान्यन्. — [cd] ) = ( var. ) 6. 102. 47[cd]. Ś1 शूरः ( for वीरः ). Ko–2 पार्थसुतं.

58 = ( var. ) 6. 102. 48. — [a] ) Ko. 2 अदर्शयन्; S विदर्शयन् ( G3 विदर्शयो ). K3 अदर्शद्वासुदेवाय. — [b] ) Dn2 हयमाने; T G1. 4 M1–4 हयज्ञाने; G2 हयज्ञाने. — [c] ) Ś1 K1 G2 मोघां; K5 मोघी· ( for मोघान् ). Ś1 हयांस ( for शरांस ). — [d] ) K3. 4 B D2. 4. 6 मंडलान्याचरल्ल; K5 मंडलीन्या°; D1 °लान्यचरद्; T2 G1. 2 °लान्यचरल्ल ( T2 °न् ); G3 °लान्याचरन्. D1 युधि; D8 ( marg. *sec. m.* ) G3 बहु ( for लघु ).

59 [a] ) Ś1 K1 तथा तु; Ko. 2 ततस्तु; G1. 3 तथा हि. D1. 3 तथा भीष्मस्तु सुदृढं. — [c] ) T2 G1–3 तीक्ष्णैः ( for बाणैः ). — [d] ) Ko–2 B1 D3 भारत ( for मारिष ).

60 = ( var. ) 6. 102. 49. — [b] ) K1. 2 भीष्मेन शरविक्षतौ; K3. 5 D1. 6. 8 तौ भीष्मशरवीक्षितौ; D1 M भीष्मस्य शरविक्ष( D2 M1 °विक्षि-; M2 °वीक्ष )तौ; T G भीष्मस्य शरपीडितौ. — [c] ) Ko नंदंतौ; K3 B1. 4 D3 S संरब्धौ; D1 संसक्तौ ( for नर्दन्तौ ). — [d] ) Ś1 °णोल्लेखितांकितैः; K4 B Da1 D1. 4 °णैर्लिखितां( Da1 °लिंखिनां-; D1 °लांछनां-; D4 °लिखनां )कितौ; K5 विषाणौ लिखि°; Dn1 D7 °णोल्लिखनांकितौ; D8 °णोल्लिखितांबरौ; T1 G4 °णोल्लेखितांकितौ; T2 G1–3 M विषाणोल्लेखनांकितौ ( M2 °शेषा )ल्लेखनांकितौ; Cc as in text. Cd cites उल्लिखितं and अंकितः.

61 [a] ) K5 D2 स संक्रुद्धः; B1. 4 Da1 D3 सुसंरब्धः. — [b] ) B D ( except D2 ) S शरैः शतसहस्रशः. — [c] ) K4 B2. 3 Da Dn D4. 5. 7. 8 भृशसंक्रुद्धो; D1 युधि विसृजन्; T2 M युधि संक्रुद्धो. — [d] ) Ś1 व्यवारयद्; D3 D5 K3 D2. 6 [ s ]प्यावार°; K4 B [s]थावार°;

वार्ष्णेयं च शरैस्तीक्ष्णैः कम्पयामास रोषितः ।
मुहुरभ्युत्स्मयन्भीष्मः प्रहस्य स्वनवत्तदा ॥ ६२
ततः कृष्णस्तु समरे दृष्ट्वा भीष्मपराक्रमम् ।
संप्रेक्ष्य च महाबाहुः पार्थस्य मृदुयुद्धताम् ॥ ६३
भीष्मं च शरवर्षाणि सृजन्तमनिशं युधि ।
प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः ॥ ६४
वरान्वरान्विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ।
युगान्तमिव कुर्वाणं भीष्मं यौधिष्ठिरे बले ॥ ६५
अमृष्यमाणो भगवान्केशवः परवीरहा ।
अचिन्तयदमेयात्मा नास्ति यौधिष्ठिरं बलम् ॥ ६६
एकाह्ना हि रणे भीष्मो नाशयेद्देवदानवान् ।
किमु पाण्डुसुतान्युद्धे सबलान्सपदानुगान् ॥ ६७
द्रवते च महत्सैन्यं पाण्डवस्य महात्मनः ।
एते च कौरवास्तूर्णं प्रभग्नान्दृश्य सोमकान् ।
आद्रवन्ति रणे हृष्टा हर्षयन्तः पितामहम् ॥ ६८
सोऽहं भीष्मं निहन्म्यद्य पाण्डवार्थाय दंशितः ।
भारमेतं विनेष्यामि पाण्डवानां महात्मनाम् ॥ ६९
अर्जुनोऽपि शरैस्तीक्ष्णैर्वध्यमानो हि संयुगे ।
कर्तव्यं नाभिजानाति रणे भीष्मस्य गौरवात् ॥ ७०
तथा चिन्तयतस्तस्य भूय एव पितामहः ।
प्रेषयामास संक्रुद्धः शरान्पार्थरथं प्रति ॥ ७१
तेषां बहुत्वाद्धि भृशं शराणां

C. 6. 2562
B. 6. 59. 74
K. 6. 59. 74

---

D$_{4.5.7.8}$ आवार° ; D$_1$ T$_1$ G M$_{1.2.5}$ प्राच्छाद° ; D$_3$ व्याच्छाद° ; T$_2$ M$_{3.4}$ प्रच्छादयद्. K$_5$ भीष्मोद्यावारयद्दिशः. — After 61, T G ins.:

198* पार्थोऽपि समरे क्रुद्धो भीष्मस्यावारयद्दिशः ।

T$_2$ cont.:

199* भीष्मोऽपि रथिनां श्रेष्ठः पार्थस्यावारयद्दिशः ।

62 a) Ś$_1$ K$_{0-2}$ स वार्ष्णेयं ( for वार्ष्णेयं च ). — b) G$_{1.3}$ क्षप° ( for कम्प° ). K$_3$ D$_{2.6}$ चाभितः ( for रोषितः ). T$_2$ सर्वगात्रेषु मारिष. — c) K$_0$ मुहुरत्यस्मयन्; K$_3$ D$_2$ मुहुरभ्यहनद्; K$_4$ B D$_{1.3.6}$ °रभ्यर्दयन्; K$_5$ °राभ्यत्स्मयद्; T G$_4$ °रस्यन्स्वयं; G$_{1.3}$ मुहुरस्यन्स्मयन्; G$_2$ °रास्यात्स्मयन्; M °रस्य स्वयं. — d) T$_1$ G$_{1.2.4}$ M$_1$ ततः ( for तदा ). Ś$_1$ प्रहस्यांबुदवत्ततः. — After 62, D$_1$ ins. an addl. colophon ( *adhy. no.* 55 ).

63 Before 63, D$_1$ ins. संजय उवाच. — a) Ś$_1$ कृष्णोस्य ( for कृष्णस्तु ). D$_3$ ततस्तु कृष्णः समरे ; T G कृष्णस्तु समरे दृष्ट्वा. — b) D$_1$ प्रेक्ष्य ( for दृष्ट्वा ). T G भीष्मं भीमपराक्रमं. — c) K$_5$ स संप्रेक्ष्य ( for संप्रेक्ष्य च ). K$_3$ D$_{2.6}$ महाबाहो. — d) Ś$_1$ K$_{0.1.5}$ T$_1$ G मृदु युध्यतः ; Da$_1$ Dn$_1$ °युध्यतां ; D$_1$ मृदुवत्त्वतां.

64 a) B$_{3.4}$ Dn$_2$ D$_{4.7.8}$ तं भीष्मं ; D$_1$ भीष्मं तु. — b) K$_{1.2}$ B$_2$ अनिसं. D$_1$ तथा ( for युधि ). — c) K$_2$ D$_8$ प्रपतंतम्. — d) D$_1$ मध्यमास्थाय.

65 a) D$_8$ वीरान् ( for the first वरान् ). T$_1$ G M$_2$ परान्; M$_4$ वीरान् ( for the second वरान् ). — d) K$_{0.5}$ यौधिष्ठिरं. K$_5$ बलं.

66 a) K$_5$ बलवान्. — b) D$_1$ केशवः केशिसूदनः. — d) K$_4$ तदा ( for नास्ति ).

67 a) S ( except G$_3$ M$_5$ ) एकाह्नापि. D$_1$ एको हि समरे भीष्मो. — b) Ś$_1$ देवमानुषान्; B$_3$ Da$_1$ Dn D$_{4.8}$ ( marg. *sec. m.* as in text ) दैत्यदानवान्. — c) K$_{3.4}$ B D$_{2.8}$ किं नु ( for किमु ). D$_3$ संख्ये ( for युद्धे ). — d) Ś$_1$ समदान्; K$_{0.2}$ सगदान्; K$_1$ सपक्षे; T$_2$ बलवान्; G$_{1.3}$ सपदान् ( for सबलान् ). D$_2$ सवाहनबलान्वितान्.

68 a) K$_5$ B$_{1.3.4}$ D$_{1.8}$ महासैन्यं. — c) D$_1$ सर्वे ( for तूर्णं ). — d) K$_5$ प्रभग्ना. Ś$_1$ पृष (sic); K$_{0.2}$ मुच्य; K$_1$ मृश्य; K$_{3.5}$ B$_4$ D$_{2.6.7}$ S वीक्ष्य; D$_1$ प्रेक्ष्य ( for दृश्य ). B$_1$ सैनिकान्. — e) Ś$_1$ आद्रवंत; K$_2$ B$_4$ प्राद्रवंति; K$_5$ कौरवाश्च; D$_1$ व्यद्रवंत; D$_8$ आर्दयंति. Ś$_1$ K$_{4.5}$ B D$_6$ दृष्ट्वा ( for हृष्टा ). — f) K$_5$ हर्षयंतं; M$_2$ आर्षयंतः.

69 a) K$_{3.5}$ D$_{2.3}$ S निहत्याद्य. — b) Ś$_1$ K$_1$ दंशितं; K$_{0.2}$ S दंसितः. — c) K$_3$ D$_{2.6}$ भारमेवं; S ( except T$_2$ ) °मेनं. D$_1$ भारमद्यापनेष्यामि.

70 a) Ś$_1$ K$_{3-5}$ B$_3$ D$_{1-4.6.7}$ M$_{2.4}$ अर्जुनो हि; Da Dn °नोद्य. K$_{0-2}$ अर्जुनो निशितैस्तीक्ष्णैर्. — b) Ś$_1$ तप्य° ( for वध्य° ). K$_{0-4}$ B$_2$ D$_{1-3.6.8}$ S [ऽ]पि; B$_{3.4}$ [ऽ]थ; Da Dn$_1$ [ऽ]द्य ( for हि ).

71 b) T$_2$ भूयस्तव पितामहान्.

C. 6. 2582
B. 6. 59. 74
K. 6. 59. 74

दिशोऽथ सर्वाः पिहिता बभूवुः ।
न चान्तरिक्षं न दिशो न भूमि-
र्न भास्करोऽदृश्यत रश्मिमाली ।
ववुश्च वातास्तुमुलाः सधूमा
दिशश्च सर्वाः क्षुभिता बभूवुः ॥ ७२
द्रोणो विकर्णोऽथ जयद्रथश्च
भूरिश्रवाः कृतवर्मा कृपश्च ।
श्रुतायुरम्बष्ठपतिश्च राजा
विन्दानुविन्दौ च सुदक्षिणश्च ॥ ७३
प्राच्याश्च सौवीरगणाश्च सर्वे
वसातयः क्षुद्रकमालवाश्च ।
किरीटिनं त्वरमाणाभिसस्रु-
र्निदेशगाः शांतनवस्य राज्ञः ॥ ७४
तं वाजिपादातरथौघजालै-
रनेकसाहस्रशतैर्ददर्श ।
किरीटिनं संपरिवार्यमाणं
शिनेर्नप्ता वारणयूथपैश्च ॥ ७५
ततस्तु दृष्ट्वार्जुनवासुदेवौ
पदातिनागाश्वरथैः समन्तात् ।
अभिद्रुतौ शस्त्रभृतां वरिष्ठौ
शिनिप्रवीरोऽभिससार तूर्णम् ॥ ७६
स तान्यनीकानि महाधनुष्मा-
ञ्शिनिप्रवीरः सहसाभिपत्य ।
चकार साहाय्यमथार्जुनस्य
विष्णुर्यथा वृत्रनिषूदनस्य ॥ ७७
विशीर्णनागाश्वरथध्वजौघं
भीष्मेण वित्रासितसर्वयोधम् ।
युधिष्ठिरानीकमभिद्रवन्तं

---

72 $^{a}$) K3.5 D2 बहुत्वाद्धि-; K4 B1.2.4 Da Dn D1.3–8 °त्वात्तु; B3 मुहूर्तात्तु; S बहुत्वात्सु- (for °त्वाद्धि). — $^{b}$) Ko–2 B1.2.4 दिशश्च; Da Dn1 D3.5 दिशो हि. Dn1 om. (hapl.) from पिहिता up to सर्वाः in $72^{f}$. Ś1 Ko–2 व्यथिता; Co पिहिता (as in text). T1 G समीक्ष्य (for बभूवुः). — Ko.1 om. $72^{c}$–$73^{b}$. K3 om. (hapl.) $72^{cdef}$. — $^{c}$) D8 S नैवांत° (for न चान्त°). — $^{e}$) D3 ववुस्तु; T1 (before corr.) G3 वपुश्च. Some MSS. तुमलाः. K5 विधूमा; D1 प्रचंडा; D8 M2 सुधूमा. — $^{f}$) Ś1 पतिता; Dn2 तुमला (for क्षुभिता).

73 Ko.1 om. $73^{ab}$ (cf. v. l. 72). — $^{a}$) D1 द्रौणिर्. K2.5 D1.2.4.7.8 M4 विकर्णश्च. — $^{b}$) D1 श्रुतायुरश्वस्य पतिश्च राजा. — $^{c}$) Ko.1 श्रुतायुरश्वस्य पतिश्; K3 शतायुरंबष्ठ°. Ś1 स (for च). M1–3.5 राजन् (for राजा). — $^{d}$) K2 सुदक्षिणं च; S महीक्षितश्च (M1–3.5 °तौ च).

74 $^{a}$) Ko–2 सौवीरजनाश्च. — $^{b}$) D (except D1–3.6) वशातयः; G2 वासादयाः. Ko कृत्तक-; Dn2 क्षुद्रका. — Ko om. (hapl.) $74^{c}$–$75^{b}$. — $^{c}$) Dn2 D4.7 विसस्रुर्; D1 हि वव्रुर्; D3 विवव्रुर्; D8 विशंति; T1 G2.4 तु तूर्णं (for [अ]भिसस्रुर्). — $^{d}$) S राजन् (for राज्ञः). — After 75, D1 ins.:

200* तवापि पुत्रस्य तु कोपनस्य ।

75 Ko om. $75^{ab}$ (cf. v. l. 74). — $^{a}$) D1 तैर् (for तं). K1.3 °पादातरथोघ°; K2 °पदातिरथौघ°; Dn1 M3.5 °पादातिरथौघ°. — $^{b}$) D1 समंतात् (for ददर्श). — $^{d}$) K3.5 D2 शनेर्नप्ता; D3 Dn1 D5 नप्ता शिनेर्; T1 शिनैर्नप्ता. D1 वृष्णिवरप्रियैषी; T2 वारणयूथपाश्च.

76 $^{a}$) Dn2 D2 ततश्च; D1 ततः स (for ततस्तु). — $^{b}$) D3 पादाति°. — $^{c}$) Ś1 अभिद्रुतं शस्त्रभृतां वरिष्ठं. — Ko.1.5 om. (hapl.) $76^{d}$–$77^{a}$. — $^{d}$) K3 D2.3 शनि°. Da Dn1 °रोथ ससार; D5 °रोपससार.

77 Ko.1.5 om. $77^{a}$ (cf. v. l. 76). — $^{a}$) B1 शतान्य°; S ततो ह्य° (for स तान्य°). K2 B D (except D1–3.6) धनुष्मतां वरः (for महाधनुष्मान्). — $^{b}$) K3 D2 शनिप्रवीरः. D2 [अ]भिगत्य; D3 निपत्य. — $^{d}$) K3 वज्र° (for वृत्र°). A few MSS. °निसू°.

78 $^{a}$) D1 T1 G1.2.4 M4 विकीर्ण- (for विशीर्ण-). Ś1 Ko.1 -द्विपौघं (for -ध्वजौघं). — $^{b}$) Ś1 भीष्मं च (for भीष्मेण). K3 D6 °सर्वयोधाः. — $^{c}$) Ko.2.5 यौधि°. D2 उप- (for अभि-). — $^{d}$) Ś1 संस्मृत्य; M1.2 संदिश्य (for संदृश्य). Ś1 K3.5 D2 शनिप्र°; Da1 निशि प्र°.

प्रोवाच संदृश्य शिनिप्रवीरः ॥ ७८
क्व क्षत्रिया यास्यथ नैष धर्मः
सतां पुरस्तात्कथितः पुराणैः ।
मा स्वां प्रतिज्ञां जहत प्रवीराः
स्वं वीरधर्मं परिपालयध्वम् ॥ ७९
तान्वासवानन्तरजो निशम्य
नरेन्द्रमुख्यान्द्रवतः समन्तात् ।
पार्थस्य दृष्ट्वा मृदुयुद्धतां च
भीष्मं च संख्ये समुदीर्यमाणम् ॥ ८०
अमृष्यमाणः स ततो महात्मा
यशस्विनं सर्वदशार्हभर्ता ।
उवाच शैनेयमभिप्रशंस-
न्दृष्ट्वा कुरूनापततः समन्तात् ॥ ८१
ये यान्ति यान्त्वेव शिनिप्रवीर
येऽपि स्थिताः सात्वत तेऽपि यान्तु ।
भीष्मं रथात्पश्य निपात्यमानं
द्रोणं च संख्ये सगणं मयाद्य ॥ ८२
नासौ रथः सात्वत कौरवाणां
क्रुद्धस्य मुच्येत रणेऽद्य कश्चित् ।
तस्मादहं गृह्य रथाङ्गमुग्रं
प्राणं हरिष्यामि महाव्रतस्य ॥ ८३
निहत्य भीष्मं सगणं तथाजौ
द्रोणं च शैनेय रथप्रवीरम् ।
प्रीतिं करिष्यामि धनंजयस्य

C. 6. 2595
B. 6. 59. 87
K. 6. 59. 87

79 $^a$) B3 धिक् (for क्व). K0 यास्यत वैष. — $^b$) K3. 5 B2. 3 Da Dn1 D1. 2, 5. 6 S पुराणः (D1 °णे; T2 °णं). — $^c$) K0. 1 M2 मां स्वां; K3 मा स्वां; K5 D1 मा तां; B Da Dn D4. 5. 7. 8 T G मा स्व. K5 जहथ; B D (except D2. 3. 6) S त्यजत (for जहत). K5 प्रवीरान्. — $^d$) K0–2. 4. 5 D2 M स्ववीर (K4 °र्यं) धर्मं; B Da Dn D4. 5. 7. 8 स्व (B1. 2 सु-; B3. 4 D7 स्वं) वीरधर्मान्. Ś1 K1 Dn2 D7. 8 M1. 2. 3 (before corr.) प्रति° (for परि°).

80 $^a$) B1. 4 D1 T2 G1. 2. 4 M2. 3. 5 निशाम्य. — $^b$) Dn2 D4. 7 समेतान् (for समन्तात्). — K2 om. (hapl.) 80$^c$–81$^d$. — $^c$) K3 Da Dn1 D3. 5. 6 मृदुयुध्यतां च; T1 G मृदु युद्ध (T1 G4 -बुद्धि) वीर्यं. — $^d$) T1 G M1. 3–5 संख्ये; T2 युद्धे; M2 बाणान्. T2 समुदीर्णं°; Ca °दीर्यं° (as in text). D1 भीष्मं संख्ये निहतं मयाद्य.

81 K2 om. 81 (cf. v. l. 80). D1 om. (hapl.) 81–82. — $^a$) B D (except D2. 3. 6; D1 om.) तु (for स). — $^b$) K5 यशस्विनः. Ś1 K4 Dn1 D3. 4 (by corr.) T1 G4 सर्वदाशार्हभर्ता; K0 तं स दशार्हं°; K3 सर्वदशार्हकर्ता; B2 °हर्ता. — $^c$) K0. 1 अभिप्रशंस्य. — $^d$) Ś1 कुरूणां परितः. D3 समस्तान्; S समग्रान्.

82 D1 om. 82 (cf. v. l. 81). — $^a$) Ś1 K0. 2 यांत्येव; K1 यातैव; K4 यांतेव; Da1 Dn1 यांत्वैव; D3 ते यांतु; T2 यात्येव (for यान्त्वेव). Ś1 K3. 5 D2 शनिप्रवीर. D3 ये क्षत्रियस्त्वे च शनि° (sic). — $^b$) Ś1 K0–2 T G4 M1–3. 5 येवस्थिताः; G1–3 ये व (G2 नि)-र्जिताः. D3 सात्यके; M सत्यक (for सात्वत). — $^c$) Ś1 K0–2 पश्यत पात्यमानं; G1. 3 पश्यसि पात्य°. — $^d$) K0 संख्यं; S (mostly) संखे. T1 G शरणं (for सगणं). K5 समायात्; D3 तथाद्य.

83 $^a$) K3–5 D2. 6 न मे रथः; B1. 2. 4 Da1 Dn1 D1 न मे रथी; B3 न मे रणे; Da2 Dn2 D4. 5. 7. 8 न मे बले; D3 चक्रान्न मे; T G न सारथेः; M नासौ रणे. K5 सात्यकि; D1 सात्यकिः; M सत्यक (for सात्वत). — $^b$) Ś1 क्रुद्धोस्य. Dn2 D4. 7. 8 युध्येत (for मुच्येत). M रणे हि. Ś1 G3 कंचित्; Da1 क्वचित्; D1 कोपि; G1. 2 किंचित्. — $^c$) S त (M2 क) स्मादिहादाय (for तस्मादहं गृह्य). Ca cites गृह्य. K3 रथां-गमुत्तमं; M रथांगमद्य; Ca. c °गचक्रं. — $^d$) Ś1 K3 D2. 3 S (except T2) द्रोणं; K0–2 भीष्मं (for प्राणं). Ś1 K3. 4 D2 वधिष्यामि; K0–2 D3 S (except M4) हनि° (for हरि°). K2 om. (hapl.) from महा up to ष्यामि in 84$^c$. Ś1 K0. 1. 3. 5 D1–3 S महाव्रतं च.

84 K2 om. up to ष्यामि (cf. v. l. 83). — $^a$) Ś1 K0. 1 तथा वै; K3 D2. 6 तथैव; B3 तु चाजौ; T1 G4 तदाजौ. — $^b$) G3 शैनं च (for शैनेय). Ś1 रथोत्तमौ च; K0. 1. 3. 5 B3 D2. 6 रथोत्तमौ तौ; K4 Da Dn D1. 5. 7. 8 रथप्रवीर; B1. 4 D3 S रथ (T2 महा)-

C. 6. 2595
B. 6. 59. 87
K. 6. 59. 87

राज्ञश्च भीमस्य तथाश्विनोश्च ॥ ८४
निहत्य सर्वान्धृतराष्ट्रपुत्रां-
स्तत्पक्षिणो ये च नरेन्द्रमुख्याः ।
राज्येन राजानमजातशत्रुं
संपादयिष्याम्यहमद्य हृष्टः ॥ ८५
ततः सुनाभं वसुदेवपुत्रः
सूर्यप्रभं वज्रसमप्रभावम् ।
क्षुरान्तमुद्यम्य भुजेन चक्रं
रथादवप्लुत्य विसृज्य वाहान् ॥ ८६
संकम्पयन्गां चरणैर्महात्मा
वेगेन कृष्णः प्रससार भीष्मम् ।
मदान्धमाजौ समुदीर्णदर्पः
सिंहो जिघांसन्निव वारणेन्द्रम् ॥ ८७
सोऽभ्यद्रवद्भीष्ममनीकमध्ये
क्रुद्धो महेन्द्रावरजः प्रमाथी ।
व्यालम्बिपीतान्तपटश्चकाशे
घनो यथा खेऽचिरभापिनद्धः ॥ ८८
सुदर्शनं चास्य रराज शौरे-
स्तच्चक्रपद्मं सुभुजोरुनालम् ।
यथादिपद्मं तरुणार्कवर्णं
रराज नारायणनाभिजातम् ॥ ८९
तत्कृष्णकोपोदयसूर्यबुद्धं

---

प्रवीरौ; $D_1$ रथोत्तमाग्र्यं. —[d]) $K_4$ राज्ञः स-(for राज्ञश्च). $K_3$ $Da_1$ भीष्मस्य (for भीमस्य). $K_0$ च तथाश्विनोः; $K_2$ तथार्जुनस्य; $K_{3.5}$ $Da_1$ $D_{2.5.6.8}$ $M_4$ तथाश्विनौ च; $D_1$ °श्विनाभ्यां. Ca.c cite आश्विनोः.

85 [a]) Da Dn $D_{5.8}$ °राष्ट्रपुत्रास्; $D_1$ °राष्ट्रस्य पुत्रास्. —[b]) $K_4$ तत्पक्षका; $B_{1.3.4}$ $Dn_2$ $D_{4.8}$ तत्पाक्षिका; Da $Dn_1$ $D_5$ तत्पार्श्विका (for तत्पक्षिणो). —[c]) $K_{0.1}$ राज्ञां च; $K_2$ $T_1$ $G_{2-4}$ राज्ये च (for राज्येन). $Ś_1$ इति ब्रुवारानमजात° (sic). —[d]) $Ś_1$ संमोद°; $K_{3.5}$ $D_2$ संयोज° (for संपाद°). $K_5$ अग्र-(for अद्य). $B_3$ कृष्णः; $T_1$ G हृष्टं. — After 85, $T_2$ ins. an addl. colophon (*adhy. no.* 55). T ($T_2$ after the addl. colophon) G ins. after 85:

201* इतीदमुक्त्वा स महानुभावः
सस्मार चक्रं निशितं पुराणम् ।
सुदर्शनं चिन्तितमात्रमेव
तस्याग्रहस्तं स्वयमारुरोह ।;

which is followed by 89–90 in $T_1$ G.

86 [a]) $Ś_1$ सुराभं; $K_{0.2}$ सुनादं; $D_1$ शतारं. $Ś_1$ $K_{0-3.5}$ $D_{2.3.6}$ S °नाथः (for °पुत्रः). —[b]) $B_{1.2.4}$ Da Dn $D_{4.5.7.8}$ वज्रसहस्रतुल्यं; $D_1$ वज्रसमानकल्पं. —[c]) D (except $D_{1-3.6}$) उत्क्राम्य; Cc उद्यम्य (as in text). $D_1$ करेण (for भुजेन). —[d]) $K_0$ विसर्ज्य.

87 [a]) $K_{0-3.5}$ $D_{2.8}$ $T_1$ $G_{2-4}$ $M_4$ स कंप°; $M_{1-3.5}$ प्रकंप°. $Ś_1$ $K_3$ $G_{1.2}$ चरणे; $K_5$ चरणौ; Ca चरणैः (as in text). —[b]) S जवेन (for वेगेन). $K_4$ $B_3$ transp. भीष्मं and कृष्णः. $B_2$ $D_7$ स; $D_8$ [S]भि-(for प्र-). $T_2$ भूमिं (for भीष्मम्). —[c]) $D_3$ मदात्तम्. $Ś_1$ समुदीर्यदर्पः; $K_{2.4}$ B D (exept $D_{1-3}$) M °र्णदर्पं. —[d]) $D_3$ वारणेंद्रान्.

88 [a]) $Ś_1$ सोभ्याद्रवद्; $K_3$ Da Dn $D_{1.2.4.5}$ T $G_{2-4}$ सोभिद्रवद्; $K_4$ B $D_{3.6-8}$ $G_1$ $M_5$ सोभिद्रवन्. $K_{1.3}$ अनेक°. —[b]) $K_2$ °व्ररणः (for °वरजः). —[c]) $Ś_1$ $K_{0-2}$ $T_2$ $M_{1.3-5}$ व्यालंब($K_1$ विलंब-; $T_2$ विलंबि) पीतांतपटश्; $K_5$ व्यालंबी पीतार्धपटश्; $T_1$ G व्यालंबि ($G_1$ °ब-; $G_2$ °व्य)पीतांबरधृक्. $K_{0.1}$ च काले; $K_{2.3}$ $D_{2-4}$ चकासे. —[d]) $K_5$ मेघो (for घनो). $Ś_1$ खेचिरतावनद्धः; $K_{0.1}$ खेचिरभावनद्धः; $K_{2.3}$ $D_{2.6}$ खेचिरभावि($K_2$ °व)नद्धः; $K_4$ $B_{2.3}$ खे तडिता पिनद्धः; $B_{1.4}$ $D_{1.3}$ खे तडितावनद्धः; Da $Dn_1$ $D_5$ खे($D_5$ दे) तडिताभिनद्धः; T G सूर्यमरीचिनद्धः; M खे रविभाभि($M_1$ °वि-; $M_4$ °नु)नद्धः.

89 $T_1$ G read 89–90 after 201* (cf. v.l. 85). —[ab]) $B_2$ चाथ (for चास्य). $K_3$ $D_{3.8}$ सौरेः. $K_3$ $D_3$ सुचक्र° (for तच्चक्र°). $Ś_1$ $K_0$ सुभुजांतरा($K_0$ °ना)लं; $K_3$ $Da_1$ सुभुजोरुनाभं. T G तच्चक्रपद्मं प्रगृहीतमाजौ रराज नारायणबाहुनालं. —[c]) $Ś_1$ यथादिपर्णं; $K_{3.5}$ $D_2$ यथा हि पद्मं; Da $D_5$ यथालिपद्मं; $D_6$ तथादिपद्मं. —[d]) $Da_2$ °नाभिजालं; $D_8$ °बाहुनालं.

90 $K_{0-2}$ $D_{2.6}$ (? hapl) om. 90. For sequence in $T_1$ G, cf. v.l. 85. $T_2$ reads 90 twice consecutively.

क्षुरान्ततीक्ष्णाग्रसुजातपत्रम् ।
तस्यैव देहोरुसरःप्ररूढं
रराज नारायणबाहुनालम् ॥ ९०

तमात्तचक्रं प्रणदन्तमुच्चैः
क्रुद्धं महेन्द्रावरजं समीक्ष्य ।
सर्वाणि भूतानि भृशं विनेदुः
क्षयं कुरूणामिति चिन्तयित्वा ॥ ९१

स वासुदेवः प्रगृहीतचक्रः
संवर्तयिष्यन्निव जीवलोकम् ।
अभ्युत्पतँल्लोकगुरुर्बभासे
भूतानि धक्ष्यन्निव कालवह्निः ॥ ९२

तमापतन्तं प्रगृहीतचक्रं
समीक्ष्य देवं द्विपदां वरिष्ठम् ।
असंभ्रमात्कार्मुकबाणपाणी
रथे स्थितः शांतनवोऽभ्युवाच ॥ ९३

एह्येहि देवेश जगन्निवास
नमोऽस्तु ते शार्ङ्गरथाङ्गपाणे ।
प्रसह्य मां पातय लोकनाथ
रथोत्तमाद्भूतशरण्य संख्ये ॥ ९४

त्वया हतस्येह ममाद्य कृष्ण

C. 6. 2605
B. 6. 59. 98
K. 6. 59. 97

— a ) Ś1 Da Dn1 D5 उत्कृष्टकोपोदय° ; D3 तत्कृष्णकोपोदयसूर्ययुद्धं ; T1 G2. 4 तत्कृष्णकोपोदित( G2 °पादति )सूर्यवर्चः. — b ) D5 °प्रभुजातपत्रं. — M1. 3. 5 om. 90cd. — c ) T2 G3 तत्रैव ( for तस्यैव ). — d ) Ś1 °बाहुजातं ; K4 °नाभिनालं ; T2 ( *inf. lin.* as in text ) °नाभिजातं.

91 a ) G3 तमात्तवक्रं. Ś1 प्रजहंतम् ( for प्रणदन्तम् ). — d ) Da Dn1 D4. 5. 8 T1 G4 M1–3 क्षयः. K4 B1. 2. 4 D8 ( marg. *sec. m.* as in text ) इव ( for इति ).

92 a ) D5 °चक्रं. — b ) Cc. d संवर्त° ( as in text ). ❀ Ca : उद्धरिष्यन् संहरिष्यन् । उद्वर्तयिष्यन्निति पाठः । स एवार्थः । ❀ K5 om. ( hapl. ) from जीव up to न्निव in 92d. K4 D7 सर्वलोकं ; Da1 D5 जीवलोके. — c ) K3 Da1 Dn अभ्युत्पतत् ; K4 प्रत्युत्पतन्. D1. 4 T2 बभाषे. — d ) K3 D2 जगद्दिधक्षन् ; T1 G4 वनानि धक्ष्यन् ; M4 भूतानि धक्षन्. K4 B D ( except D2. 6 ; D7 marg. as in text ) Cc धूमकेतुः ( for काल° ).

93 a ) Ko तमापतपंतं ( sic ) ; K3–5 D1–3. 6 तमाद्रवंतं ; T1 G2. 4 स ( G2 तं ) वासुदेवं ; M1 तमातपंतं. D1 प्रसमीक्ष्य भीष्मो ( for प्रगृहीतचक्रं ). — b ) Ś1 Ko–3. 5 D2. 3. 6 दृष्ट्वा कृष्णं ( D3. 6 °ष्ट्वा देवं ) शांतनवस्तदानीं ; D1 गृहीतचक्रं युधि वासुदेवं. — For 93cd, Ś1 Ko–3. 5 D1–3. 6 subst. :

202* असंभ्रमं तद्विचकर्ष दोर्भ्यां
महाधनुर्गाण्डिवतुल्यघोषम् ।
उवाच भीष्मस्तमनन्तपौरुषं
गोविन्दमाजावविमूढचेताः ।

[ ( L. 1 ) Ś1 Ko–3 D2. 3 असंभ्रमम् ; D1 °भ्रमात्. Ś1 Ko–2 तत्र ( for तद्वि- ). — ( L. 2 ) Ś1 Ko–2 D1 महद्धनुर्. K3 D2 गांडिव°. — ( L. 3 ) Om. ( hapl. ) in D1. K3. 5 D2 °वीर्यं ( for °पौरुषं ). — ( L. 4 ) D1 गोविंद जानामि तव प्रभावं. ]

— c ) T1 G4 M1. 3. 4 असंभ्रमः ; T2 अथाब्रवीत् ; G1–3 असंभ्रमं ; M2. 5 असंभ्रमन् ( for असंभ्रमात् ). G1 °पाणिं ; G2 °पाणि ; G3 M5 °पाणिः. — d ) T2 महात्मा ( for ऽभ्युवाच ).

94 a ) D1. 3 S एह्येहि फुल्लांबुजपत्रनेत्र. — b ) Ko. 2 शार्ङ्गचक्राब्जपाणे ; K1 शंराचक्रपाणे ( sic ) ; K3 B1. 3. 4 Da Dn D4–8 °गदासिपाणे ; K4. 5 D2 ( before corr. ) °चक्रासिपाणे ( K5 °णौ ) ; B2 D2 ( marg. *sec. m.* ) माधव चक्रपाणे ; D1. 3 S देववराप्रमेय ( for शार्ङ्गरथाङ्गपाणे ). — c ) Ś1 Ko. 1 M2. 4. 5 मा ( for मां ). G1. 3 पाणे ). — d ) K4 भूतसौख्यसंख्ये ( sic ) ; D1 भूतपालय. — d ) K4 भूतसौख्यसंख्ये ( sic ) ; D1 भूतपालय ; Some S MSS. संखे ( *or* संघे ). — After 94, D1 ins. :

203* ममोग्रचक्रेण निकृन्त देहं ।

95 a ) Ko–2 Da1 D3 हतस्येव ( Ko °वम् ) ; D1. 3 S हतस्यापि. Ko आसाद्य ; G2 मयाद्य. Da Dn1 D5 विष्णो ( for कृष्ण ). — b ) G3 इव ( for इह ). Ko. 2 चैक- ; K5 B2 D3 T1 G जीव- ; M2 वै च ( for चैव ). D1 श्रेयः परं भविता देवदेव. — c ) G2 [ ऽ ]पि ( for ऽस्मि ). — d ) D1 देव ( for वीर ). K2 D1 तवाभिधानात् ; K3. 5

C. 6. 2505
B. 6. 59. 98
K. 6. 59. 97

श्रेयः परस्मिन्निह चैव लोके ।
संभावितोऽस्म्यन्धकवृष्णिनाथ
लोकैस्त्रिभिर्वीर तवाभियानात् ॥ ९५
रथादवप्लुत्य ततस्त्वरावा-
न्पार्थोऽप्यनुद्रुत्य यदुप्रवीरम् ।
जग्राह पीनोत्तमलम्बबाहुं
बाह्वोर्हरिं व्यायतपीनबाहुः ॥ ९६
निगृह्यमाणश्च तदादिदेवो
भृशं सरोषः किल नाम योगी ।
आदाय वेगेन जगाम विष्णु-
र्जिष्णुं महावात इवैकवृक्षम् ॥ ९७
पार्थस्तु विष्टभ्य बलेन पादौ
भीष्मान्तिकं तूर्णमभिद्रवन्तम् ।
बलान्निजग्राह किरीटमाली
पदेऽथ राजन्दशमे कथंचित् ॥ ९८
अवस्थितं च प्रणिपत्य कृष्णं
प्रीतोऽर्जुनः काञ्चनचित्रमाली ।
उवाच कोपं प्रतिसंहरेति
गतिर्भवान्केशव पाण्डवानाम् ॥ ९९
न हास्यते कर्म यथाप्रतिज्ञं

$D_{2.6}$ Cd °सारात्; $T_1$ G °घातात्. $K_4$ B $Da_2$ (marg.) $Dn_2$ $D_{4.7.8}$ लोकैस्त्रिभिश्च प्रथितप्रभावः. — After 95, $Ś_1$ $K_{0-2}$ ins.:

204* श्रुत्वा वचः शांतनवस्य कृष्णो
वेगेन धावंस्तमथाभ्युवाच ।
त्वं मूलमस्येह भुवि क्षयस्य
दुर्योधनं चाद्य समुद्धरिष्यसि ।
दुर्द्यूतदेवी नृपतिर्निवार्यः [5]
सुमन्त्रिणा धर्मपथि स्थितेन ।
त्याज्योऽथ वा कालपरीतबुद्धि-
र्धर्मातिगो यः कुलपांसनः स्यात् ।
भीष्मस्तदाकर्ण्य यदुप्रवीरं
राजा परं दैवतमित्युवाच । [10]
त्यक्तस्तु कंसो यदुभिर्हितार्थे
धर्मात्कुरूणामधिपस्तदानीं ।
संबोध्यमानो न बुबोध राजा
क्लेशाय दैवाद्विपरीतबुद्धिः ।
श्रोता हितं यस्य न कश्चिदस्ति [15]
वक्ता भृशं स्यात्स तु किं ब्रवीतु ।

[ (L. 1) $K_2$ वाचं (for वचः). — (L. 4) $Ś_1$ समुद्धरासि. — (L. 6) $Ś_1$ धर्मपथस्थितेन. — (L. 9) $Ś_1$ रथप्रवीरो (for यदुप्रवीरं). — (L. 11) $Ś_1$ त्यक्तं हि कंसो यदुभिर्हितेन्ये. — $K_{0-2}$ om. line 12. ]

96 Before 96, $D_1$ ins. संजय उवाच. — $^a$) $K_{1.2}$ रथस्त्वरावान्; $T_2$ ततः स्वकाच्च. — $^b$) $B_{1.4}$ पार्थः पदा*त्य; $B_2$ $Da_2$ $D_5$ °र्थः पदाप्लुत्य; $B_3$ °र्थः पदौ धृत्य; $Da_1$ Dn $D_8$ °र्थः पदा द्रुत्य; $D_4$ °र्थः परिद्रुत्य; M °र्थो प्यनुप्लुत्य. — $^c$) $K_5$ $D_{3.8}$ पीनोन्नतलंबबाहुं ($D_3$ °लंबिबाहुर्); $T_1$ $G_4$ °त्तममूलबाहुं. — $^d$) $K_{0.1}$ $D_{1.3}$ °पीनबाहुं; $K_5$ °दीर्घबाहुं.

97 $^a$) $K_4$ $B_{2-4}$ D (except $D_{1.2.6}$) निगृह्यमाणस्तु; $B_1$ विगाह्यमाणस्तु. $Ś_1$ K $D_{2.6}$ $G_{1-3}$ $M_{2.5}$ तमा° (for तदा°). — $^b$) $K_{0-2}$ सरोषात्; Ca सरोषः (as in text). $K_4$ $B_2$ Da Dn $D_4$ (before corr.).5 Ca वा ($K_4$ Be $Da_2$ $Dn_2$ चा)स योगी; $K_5$ ना***; $B_4$ वासुदेवः; Cc. v नाम योगी (as in text). — $^c$) $K_4$ *दाय वेगात्. $K_{0-2.5}$ Da $T_2$ $M_{3.5}$ विष्णुं; $Dn_1$ $D_{4.7.8}$ $T_1$ G $M_1$ जिष्णुं (for विष्णुर्). — $^d$) $K_{0-2}$ $Dn_2$ $D_{4.7.8}$ $G_{1-3}$ $M_{1.2.5}$ विष्णुर्; $Da_2$ $T_2$ $M_3$ जिष्णुर् (for जिष्णुं). $K_3$ $D_{2.6}$ महावायुम् (for महावात). $D_8$ इहैक°. $D_2$ -पत्रं (for -वृक्षम्).

98 $^a$) $Ś_1$ पार्थोस्य; $T_2$ $M_2$ पार्थस्य (for पार्थस्तु). — $^b$) $K_5$ $Dn_2$ $D_4$ (before corr.) भीष्मांतकं. — $^c$) $K_4$ किरीटिमाली; $B_{1.2.4}$ Da Dn $D_{4.5.7.8}$ शनैर्महात्मा; $D_{1.3}$ S हरिं किरीटी. — $^d$) $K_3$ पदाथ; B Dn $D_{4.7.8}$ S (except $T_2$ $M_2$) पदे च (for पदेऽथ).

99 $^a$) S तु (for च). $M_1$ प्रसमीक्ष्य (for प्रणिपत्य). — $^b$) $K_5$ प्रीतोर्जुनं. T G $M_4$ °चित्रमौलिः. — $^c$) $D_5$ प्रतिसंजहार (for °हरेति). — $^d$) $K_3$ $D_{2.6}$ गतिर्भवान्पांडवानां यतो हि ($D_2$ °तोसि).

100 $^a$) $K_5$ तदास्यते. $Dn_2$ $D_4$ (m as in text) $K_{0-2}$ हास्यसे; $G_3$ यास्यते; M हास्येहं ($M_2$ °वं). $K_{0-2}$ यथा प्रतिज्ञा; कृष्ण; Cv कर्म (as in text).

पुत्रैः शपे केशव सोदरैश्च ।
अन्तं करिष्यामि यथा कुरूणां
त्वयाहमिन्द्रानुज संप्रयुक्तः ॥ १००
ततः प्रतिज्ञां समयं च तस्मै
जनार्दनः प्रीतमना निशम्य ।
स्थितः प्रिये कौरवसत्तमस्य
रथं सचक्रः पुनरारुरोह ॥ १०१
स तानभीषून्पुनराददानः
प्रगृह्य शङ्खं द्विषतां निहन्ता ।
विनादयामास ततो दिशश्च
स पाञ्चजन्यस्य रवेण शौरिः ॥ १०२
व्याविद्धनिष्काङ्गदकुण्डलं तं
रजोविकीर्णाञ्चितपक्ष्मनेत्रम् ।
विशुद्धदंष्ट्रं प्रगृहीतशङ्खं
विचुक्रुशुः प्रेक्ष्य कुरुप्रवीराः ॥ १०३
मृदङ्गभेरीपटहप्रणादा
नेमिस्वना दुन्दुभिनिस्वनाश्च ।
ससिंहनादाश्च बभूवुरुग्राः
सर्वेष्वनीकेषु ततः कुरूणाम् ॥ १०४
गाण्डीवघोषः स्तनयित्नुकल्पो
जगाम पार्थस्य नभो दिशश्च ।
जग्मुश्च बाणा विमलाः प्रसन्नाः
सर्वा दिशः पाण्डवचापमुक्ताः ॥ १०५
तं कौरवाणामधिपो बलेन

C. 6.2520
B. 6.59.109
K. 6.59.110

---

K4 G2 यथाप्रतिज्ञां; Cv यथाप्रतिज्ञं (as in text). — b) Ś1 Ko–2 च मे; D2 समं (for शपे). K5 पुत्रो शपे केशव पांडवानां. — c) Ś1 K4 B3 D (except D2.6) गमि° (for करि°). — d) K3 संघमुक्तैः; D6 संघयुक्तं (for संप्रयुक्तः). Ko–2 त्वयाहमिंद्रप्रतिमेन युक्तः; B2 °हमिंद्रावरज प्रयुक्तः.

101 a) Ko प्रतिज्ञा-. K4 B D (except D6) T1 G M च तस्य; T2 तदस्य (for च तस्मै). — c) K2 B1.2.4 Da Dn1 D4.5.7 T2 प्रियः; D2 प्रियं (for प्रिये). D1 कौरवसत्तमानां. — d) K3 सुचक्रः; B T1 G4 सचक्रं; Dn2 प्रचक्रः. — After 101, T1 G ins.:

205* ततः प्रतिज्ञां समवाप्य भीष्मः
कृताञ्जलिः स्तुत्यमथाकरोद्वै ।
त्रैविक्रमे यस्य वपुर्बभासे
तथैव दृष्ट्वा तु समुज्ज्वलन्तम् ।

102 a) Ś1 K1.2 D2 Cv अभीशून्; K5 °भीभूत्; Cc.d °षून् (as in text). Ś1 आदधानः. T1 G4 पुनस्त्वरन्वै वरदो जिघांसुः; T2 G1–3 M2 पुनस्त्वरन्वै वरदो जि(G2 °रन्नेव रिपोर्जि)घांसन्; M1.3–5 पुनस्त्वरीन्वै व-(M4 °स्त्वरावान्व)रदो जिघांसन्. — c) K3.4 B D (except D1.3.6) निनादयामास; K5 तं पूरयामास. D1 K4 B Da1 Dn D4.7.8 T G M4 दिशो नभश्च; D1 M1–3.5 नभो. दिशश्च. — d) Ś1 शौरि; D3.8 सौरिः.

103 a) K5 D2.8 आविद्ध-; D6 व्यादिश्य. Ś1 Ko–2 °कुंडलांतं. — b) Ś1 Ko.1 रजोप-; K5 रजःप्र- (for रजोवि-). K3.4 B3 Dn2 D1–3.4 (by corr.). 6.8 T G M4 -पद्मनेत्रं; B1.2.4 Da Dn1 D4.5.7 -पत्रनेत्रं; M1–3.5 -नेत्रपद्मं (for -पक्ष्मनेत्रम्). — c) T1 G4 विचित्रदंष्ट्रं; Cv विशुद्ध° (as in text). Ko–2 °चक्रं (for °शङ्खं).

104 a) Ś1 Ko–2 °भेरीमुरजप्रणादा; K3–5 D1–3.6 S °भेरीप(K5 °प्र)णवप्रणादा. — b) Some MSS. °निःस्वनाश्च. — S (except M4) *repeats* 104[cd] after 114[ab]. — c) Ko बभूव रुद्राः; K2 °च रौद्राः; T G M1–3 (all both times).4.5 (both times) °वुरुच्चैः (for °वुरुग्राः). — d) Da1 सर्वे ह्य°; D2 सर्वेष्व°. S (G3 M5 both times) कुरूत्तमानां; T G1.2.4 M1–3 (all second time) तथा कुरूणां (for ततः कुरूणाम्).

105 a) A few MSS. गांजीव°. K4 °धन्वा (for °घोषः). — b) T1 G4 ससार (for जगाम). K3 Da1 पार्थश्च; K4 पार्थोस्य. S दिशो नभश्च (for नभो दिशश्च). — c) D1 प्रमुक्ताः (for प्रसन्नाः). — d) D2 °चापयुक्ताः; T2 °चापमुख्यान्; M °बाहुमुक्ताः.

106 a) D2 S (except T2 G1.4) स; D3 तत् (for तं). G1.3 अभितो (for अधिपो). D3.7 S जवेन (for बलेन). — b) T2 पार्थः (for सार्धम्). — c) Dn2

C. 6. 2520
B. 6. 59. 109
K. 6. 59. 110

भीष्मेण भूरिश्रवसा च सार्धम् ।
अभ्युद्ययावुद्यतबाणपाणिः
कक्षं दिधक्षन्निव धूमकेतुः ॥ १०६

अथार्जुनाय प्रजहार भल्ला-
न्भूरिश्रवाः सप्त सुवर्णपुङ्खान् ।
दुर्योधनस्तोमरमुग्रवेगं
शल्यो गदां शांतनवश्च शक्तिम् ॥ १०७

स सप्तभिः सप्त शरप्रवेका-
न्संवार्य भूरिश्रवसा विसृष्टान् ।
शितेन दुर्योधनबाहुमुक्तं
क्षुरेण तत्तोमरमुन्ममाथ ॥ १०८

ततः शुभामापततीं स शक्तिं
विद्युत्प्रभां शांतनवेन मुक्ताम् ।
गदां च मद्राधिपबाहुमुक्तां
द्वाभ्यां शराभ्यां निचकर्त वीरः ॥ १०९

ततो भुजाभ्यां बलवद्विकृष्य
चित्रं धनुर्गाण्डिवमप्रमेयम् ।
माहेन्द्रमस्त्रं विधिवत्सुघोरं
प्रादुश्चकाराद्भुतमन्तरिक्षे ॥ ११०

तेनोत्तमास्त्रेण ततो महात्मा
सर्वाण्यनीकानि महाधनुष्मान् ।
शरौघजालैर्विमलाग्निवर्णै-
र्निवारयामास किरीटमाली ॥ १११

शिलीमुखाः पार्थधनुःप्रमुक्ता
रथान्ध्वजाग्राणि धनूंषि बाहून् ।
निकृत्य देहान्विविशुः परेषां

$D_{4.7.8}$ प्रत्युद्ययावू; $D_2$ अभ्युद्यतो. $K_4$ B Da $Dn_1$ $D_{1.5}$ उत्तमबाण( $B_2$ °शस्त्र )पाणिः; $D_2$ [ऽ]युध्यत बाण-पाणिः; $D_3$ उद्यतचापपाणिः. — [d]) Ko कक्ष्यं; $M_2$ कक्षान्. — After 106, Ko–2 ins. an addl. colophon.

107 Before 107, $Ś_1$ Ko–2 ins. संजयः. — [a]) $B_2$ Da $Dn_1$ $D_5$ Ca प्रजिघाय (for प्रजहार). $G_{2.3}$ फल्लान् (for भल्लान्). — [b]) $K_5$ शुद्ध- (for सप्त). — [c]) $K_3$ $D_{2.6}$ उग्रवीर्यं; S उग्र( $T_2$ आयु )धन्वा.

108 [a]) $K_3$ $D_{2.6}$ शरप्रवर्या( $D_2$ °र्ज्या )न्; $K_4$ $Dn_2$ $D_8$ $T_2$ °प्रवेगान्; $K_5$ °प्रबर्हान्; $D_1$ च तत्र भल्लाः; $M_4$ शरांश्च वेगान्; Ca.c शरप्रवेकान् (as in text). $G_3$ स सप्त सप्ताश्च शरप्रवेगान्. — [b]) $Ś_1$ Ko–2 विदार्य; $K_{3.5}$ $D_{2.6}$ निवार्य (for संवार्य). $Ś_1$ वरिष्ठान्; B $D_{1.4.6.7}$ प्रमुक्तान्; Da Dn $D_{5.8}$ प्रयुक्तान्; $T_1$ प्रहृष्टान्; $T_2$ [ऽ]वसृष्टान्; $G_{1.3.4}$ M प्रसृष्टान्; $G_2$ पृषत्कान् (for विसृष्टान्). — [c]) Ko शरेण; $K_{1.2}$ शतेन; $D_{3.8}$ सितेन. $D_2$ °माशु विध्वा (for °बाहुमुक्तं). — [d]) $Ś_1$ $K_{1.2}$ $D_8$ शरेण (for क्षुरेण). $D_{3.6.8}$ तं तोमरम्.

109 [a]) Ko शुभाश्चापततीं; Da $D_5$ $T_2$ $M_4$ °माप-तितां; $G_{1.3}$ °मापतंतीं. Ko.3 B Da $D_{2.4–6.8}$ च (for स). — [b]) $D_8$ विष्वक्प्रभां. $K_1$ $D_8$ मुक्तम्. — [c]) Ko–2 °हस्त°; S °वेग° (for °बाहु°). — [d]) S (except $T_1$ $G_4$) क्षुराभ्यां (for शरा°). $K_4$ $D_3$ $G_3$ विचकर्त; $T_1$ $G_{2.4}$ स चकर्त.

110 [c]) $Ś_1$ $K_5$ $Dn_2$ $D_{4.5.7.8}$ ( marg. *sec. m.*) T $G_{2.4}$ महेंद्रमस्त्रं; $D_8$ महेंद्रवज्रं. $K_{3.5}$ विविधं; $D_2$ सु-विधं; $T_2$ विदधत् (for विधिवत्). Ko सघोरं; $T_1$ प्रयुक्तं (for सुघोरं). — [d]) $K_5$ °रिक्षं; B °रीक्षे.

111 [a]) $D_8$ तत्रोत्तमास्त्रेण; $T_1$ $G_4$ $M_2$ तदोत्तमा°; $T_2$ ततोत्कम°; $G_{1.3}$ तथोत्तमा°; $G_2$ तथोत्कशा°; $M_{1.3–5}$ ततोत्तमा°. $M_{1.3.5}$ तदा (for ततो). — [b]) $Ś_1$ $K_{1.3}$ $D_5$ सर्वान्य°. — [c]) $Da_1$ $D_5$ °ग्निवर्णौ; $D_1$ °कवर्णैः; $T_2$ °ग्निखंडैर्. — [d]) $Da_1$ निर्वार°. — After 111, S ins.:

206* भीष्मं शरैः संपरिवार्य संख्ये
चिच्छेद भूरिश्रवसश्च चापम् ।
शल्यं च विद्धा नवभिः पृषत्कै-
र्दुर्योधनं वक्षसि निर्बिभेद ।

112 [a]) $D_{2.3}$ शली°. $K_1$ $D_8$ °नुर्विमुक्ता; $K_5$ °नुःप्र-युक्ता; B Da $Dn_1$ $D_{4.5.7}$ °नुर्विसृष्टा (for °नुःप्रमुक्ता). — [b]) B Da $Da_1$ $D_5$ रथध्वजाग्राणि; S रथान्ध्वजा-न्बाण-. $G_3$ बाणान् (for बाहून्). — [c]) $D_3$ निकृत्य; $T_1$ $G_4$ निकृत्त-; $M_2$ विकृत्य. $D_{3.7}$ ( both marg. as in

नरेन्द्रनागेन्द्रतुरंगमाणाम् ॥ ११२

ततो दिशश्चानुदिशश्च पार्थः
शरैः सुधारैर्निशितैर्वितत्य ।
गाण्डीवशब्देन मनांसि तेषां
किरीटमाली व्यथयांचकार ॥ ११३

तस्मिंस्तथा घोरतमे प्रवृत्ते
शङ्खस्वना दुन्दुभिनिस्वनाश्च ।
अन्तर्हिता गाण्डिवनिस्वनेन
बभूवुरुग्राश्च रणप्रणादाः ॥ ११४

गाण्डीवशब्दं तमथो विदित्वा
विराटराजप्रमुखा नृवीराः ।
पाञ्चालराजो द्रुपदश्च वीर-
स्तं देशमाजग्मुरदीनसत्त्वाः ॥ ११५

सर्वाणि सैन्यानि तु तावकानि
यतो यतो गाण्डिवजः प्रणादः ।
ततस्ततः संनतिमेव जग्मु-
र्न तं प्रतीपोऽभिससार कश्चित् ॥ ११६

तस्मिन्सुघोरे नृपसंप्रहारे
हताः प्रवीराः सरथाः ससूताः ।
गजाश्च नाराचनिपाततप्ता
महापताकाः शुभरुक्मकक्ष्याः ॥ ११७

परीतसत्त्वाः सहसा निपेतुः
किरीटिना भिन्नतनुत्रकायाः ।
दृढाहताः पत्रिभिरुग्रवेगैः

C. 6. 2632
B. 6. 59. 121
K. 6. 59. 122

---

text) देहाद्; T2 देहे; G1-3 M देहं (for देहान्). K3 निविशुः; Da1 D5 विमुच्य (for विविशुः). — $^{d}$) Ś1 K0-2 नरेंद्रनागाश्वतुरं°; T2 नरेंद्रदेहं तु तुरं°.

113 $^{a}$) Ś1 D3 M4 सानु°; K4 च प्र-; B Da Dn D1.4.6-8 सोनु° (for चानु°). K4 बाणैः; K5 सर्वाः (for पार्थः). — $^{b}$) K4 पार्थः (for शरैः). M3 सुसारैर् (for सुधारैर्). K3 D2 सहसा; D3.6 समरे (for निशितैर्). B2 निकृत्य; B4 विभिद्य; T1 निवृत्य; G2.4 विवृत्य (for वितत्य). — K5 om. (hapl.) 113$^{c}$–114$^{d}$.

114 K5 om. 114 (cf. v. l. 113). — $^{a}$) Da1 Dn1 D5 ध्वस्मिंस्तथा. B Da Dn D4.5.7.8 घोरतमास्त्रयुद्धे (B1 °स्त्रवृंदे; Da1 D5 °श्च युद्धे); D1 घोरतमे प्रपाते; T G2.4 °तरे (T2 °रं) प्रवृत्ते. — $^{b}$) Some MSS. °निःस्वनाश्च. — After 114$^{ab}$, S (except M4) *repeats* 104$^{cd}$ with v. l. — $^{d}$) K1 om. (? hapl.) from णप्रणादाः up to ग्मुर in 115$^{d}$. Ś1 K2 Da Dn1 D1.5-8 T2 M उग्राश्वरथ(M1-3.5 °श्च तथा)प्रणादाः; K0.3.4 B Dn2 D2-4 उग्राश्च रथप्रणादाः.

115 G1.3 om. (hapl.) 115$^{a}$–116$^{b}$. K1 om. up to ग्मुर in 115$^{d}$ (cf. v. l. 114). — $^{b}$) Ś1 विराजनामप्रमुखा. K3 B1 D2.6.8 प्रवीराः; S (G1.3 om.) नरेंद्राः (for नृवीराः). — $^{c}$) D7 पंचाल°. T2 द्रुपदाश्च वीरास्. — $^{d}$) K2 M2 तद्देशम्.

116 G1.3 om. 116$^{ab}$ (cf. v. l. 115). — $^{a}$) D3 सु-; S (G1.3 om.) च (for तु). — $^{b}$) K5 गांजिवजः; M गांडिवज्या-. — $^{c}$) Cc संनयम् (for संनतिम्). S चक्रुः (for जग्मुर्). — After 116$^{c}$, S ins.:

207* पुनः पुनर्धार्तराष्ट्राः समग्राः ।

— $^{d}$) Ś1 D2.3 G1.3 M5 प्रतीतो; K0-2 प्रभीतो; K5 प्रतितो; Ca.c प्रतीपो (as in text). K3 D2 [ऽ]तिससार; D6 [ऽ]पससार.

117 $^{a}$) D3 तु; D4 स (for सु-). — $^{b}$) Ś1 K0-3 D2 हत- (for हताः). T1 G4 प्रभग्नाः (for प्रवीराः). K0-2 सहयाः ससूताः; K3 B Da2 Dn D1.4.6-8 G1 सरथाश्वसूताः (D1 °श्वशूराः); Da1 D2.3.5 सरथाश्च सूताः (D3 शूराः); T2 ससुताः ससूताः. — $^{c}$) T G हयाश्च नागाश्च निघा(T2 °तां; G2.3 °वा)ततप्ता; M हयाश्च नागाः शरपाततप्ता. — $^{d}$) B Da Dn D5.7 °कक्षाः; D4 °दंडाः (for °कक्ष्याः). Ś1 K0-2 वातायमाना ध्वजवैजयंत्यः; K3 D1-3.6 Cd महापताकोच्छ्रय(D1 °कोच्छ्रित)वैजयंत्यः; K5 महापताकोयतवैजयंतः (sic).

118 $^{a}$) K0-3.5 D2.6 परेत(K5 °रे न-)सत्त्वाः; D3 परीतशस्त्राः; Cc °सत्त्वाः (as in text). — $^{b}$) B D (except D1-3.6) तत्र विभिन्नकायाः; T1 G4 भिन्नतनुत्रगात्राः. — $^{c}$) B1.2 D6.8 S दृढं हताः; D1 इच्छाहताः. K3 पंचभिर्; D3 पत्तिभिर् (for पत्रिभिर्). — $^{d}$) K1 निशतैः; K4 B1 D3 S विमलैः (for निशितैः). K1 शताग्रैः.

C. 6. 2532
B. 6. 59. 121
K. 6. 59. 122

पार्थेन भल्लैर्निशितैः शिताग्रैः ॥ ११८

निकृत्तयन्त्रा निहतेन्द्रकीला
ध्वजा महान्तो ध्वजिनीमुखेषु ।
पदातिसंघाश्च रथाश्च संख्ये
हयाश्च नागाश्च धनंजयेन ॥ ११९

बाणाहतास्तूर्णमपेतसत्त्वा
विष्टभ्य गात्राणि निपेतुरुर्व्याम् ।
ऐन्द्रेण तेनास्त्रवरेण राज-
न्महाहवे भिन्नतनुत्रदेहाः ॥ १२०

ततः शरौघैर्निशितैः किरीटिना
नृदेहशस्त्रक्षतलोहितोदा ।
नदी सुघोरा नरदेहफेना
प्रवर्तिता तत्र रणाजिरे वै ॥ १२१

वेगेन सातीव पृथुप्रवाहा
प्रसुस्रुता भैरवारावरूपा ।
परेतनागाश्वशरीररोधा
नरान्त्रमज्जाभृतमांसपङ्का ॥ १२२

प्रभूतरक्षोगणभूतसेविता

---

119 $D_2$ om. $119^{ab}$. — $^a$) Ś$_1$ निकृत्तयत्तो; $K_3$ $D_5$ निकृंतयंत्रा; $D_4$ निकृत्यपत्रा; $Da_2$ °त्य यंत्रा; $D_6$ °त्य सत्त्वा. Cc. d cite निकृत्तं and यत्रं ( Cd °त्राणि ). Ś$_1$ $K_{3.4}$ $B_3$ $D_6$ विहि( $K_4$ $B_3$ °ह )तेंद्रजाला; $K_{0.1.5}$ $Dn_2$ ( *sup. lin.* as in text ) $D_{3.4.7}$ S Cv निह( $K_5$ $D_3$ °हि )तेंद्रजाला. Cc cites निहतं and इंद्रजालं; Cd °जालानि. $K_2$ $D_{1.8}$ निकृंतयंत्राणि ह( $D_1$ हि )तेंद्रजाला. — $^b$ ) Ś$_1$ $K_{0-3.5}$ Da Dn $D_{4.6-8}$ नृपाणां; $D_5$ मुखानां ( for महान्तो ). $B_3$ S °पतीनां ( for °मुखेषु ). $K_4$ सहस्रशस्ते ध्वजिनी°. — $^c$ ) Ś$_1$ $K_{0-2}$ रथाश्वसंघा; $K_5$ नृपाश्च संख्ये; $D_1$ रथौघसंघा. S ( mostly ) संघे *or* संखे. — $^d$ ) $D_2$ रथाश्च ( for हयाश्च ). $D_5$ रथो रथाश्वाश्च धनं°.

120 $^a$ ) Ś$_1$ $K_{0.1}$ बाणाहतास्तूत्तमसत्त्वयु( $K_{0.1}$ °मु )-क्ता; $K_3$ °हतास्तूर्णनिपेतसत्त्वा; S बाणा( $G_2$ बला )-हताः पेतुर( $M_2$ °तास्तूर्णम )दीनसत्त्वाः. — S ( except $M_4$ ) om. $120^b$. — $^b$ ) $B_{3.4}$ $Dn_2$ $D_{4.7.8}$ विस्त्रं( $B_3$ $Dn_2$ °स्र )स्य; $M_4$ विसृज्य ( for विष्टभ्य ). $B_{2.3}$ Da Dn $D_{4.5.7.8}$ शस्त्राणि ( for गात्राणि ). $B_3$ [अ]थ ( for नि- ). $D_1$ विस्रस्तगात्राश्च निपेतुरु°. — After $120^{ab}$, $M_4$ *repeats* $119^c$. — $D_2$ om. $120^c$–$121^b$. — $^c$ ) Ś$_1$ तेनाशु शरेण; $D_8$ तेनास्त्रबलेन. — $^d$ ) $K_4$ B Da Dn $D_{4.5.7.8}$ °कायाः; $D_1$ °गात्राः ( for °देहाः ). S प्रकीर्ण-विच्छिन्नशिरोरुकायाः.

121 $D_2$ om. $121^{ab}$ ( cf. v. l. 120 ). — $^b$ ) $K_0$ ***मस्त्रक्षत°; $K_1$ नृदेहमस्त्रक्षत°; $K_5$ Da $Dn_1$ $D_5$ °शस्त्राक्षत°; $D_1$ शस्त्रैः कृतास्ते शकलानि राजन्. — $^c$ ) $K_3$ सुदेहा; $Dn_1$ सघोरा; $D_8$ च घोरा. $K_0$ नरदेहहीना; $K_4$ B Da Dn $D_{3-8}$ नरमेदफेना; $D_1$ नरदेववाहिनी; $D_2$ नरंदेव तेन. — $^d$ ) $D_8$ रणांगणे ( for रणाजिरे ). $D_1$ प्रवर्तिता तस्य रणस्य मध्ये. — For 121–122, S subst. :

208* ततः शरौघैर्निशितैः किरीटी
प्रवर्तयामास नदीं सुघोराम् ।
नृनागवाजिक्षतलोहितोदां
नरेन्द्रमज्जास्थिकमांसफेनाम् ।

[ ( L. 2 ) $M_{1.3-5}$ प्रावर्त°. — ( L. 4 ) $T_2$ M नरांत्र ( $T_3$ $M_2$ °रेंद्र )मज्जोद्धृतमांस°; $G_{2.3}$ नरांत्रमज्जास्थिक° ( $G_1$ °त° ). ]

122 For subst. in S, cf. v. l. 121. — $^a$ ) Ś$_1$ $K_{0.1}$ गंगेव ( for वेगेन ). $D_6$ यातीव ( for सातीव ). $K_5$ वेगेन सा मांसवसाप्रवाहा. — $K_4$ B $Dn_2$ $D_{1.2.3}$ om. $122^b$. — $^b$ ) $K_{3.5}$ $D_{1.3.6}$ प्रसुस्रुवे; $D_2$ सुप्रस्रुता. Ś$_1$ $K_{0-2}$ चैव वराहरूपा; $K_{3.5}$ $Da_2$ $D_{1-3.5.6}$ भैरवरावरूपा. — $^c$ ) Ś$_1$ $K_1$ $B_1$ परीतवाहा( $B_1$ °नागा )श्व°; $K_{0.2}$ परेतवाहाश्वशरीरतीरा ( $K_0$ °रोधा ); $K_3$ °नागाश्वशरीररूपा; $B_2$ Da $D_5$ परीतनागा( $Da_1$ $D_5$ °शा )श्वशरीरतीरा; $B_4$ Dn $D_{4.7.8}$ परेतनागाश्वशरीरतीरा; Cv as in text. Cc cites परेता. Cd cites °बाधा. — $^d$ ) $K_0$ नरांत्रसंज्ञैर्वृतमांस°; $K_1$ नरत्तमजैर्वितमांस° ( sic ); $K_2$ नाराचमज्जावृत°; $K_3$ $D_{2.6}$ नरांत्रमज्जोद्धृत-मांस( $D_2$ °रक्त )पंका; $K_4$ B Da Dn $D_{4.5.7.8}$ नरेंद्र-मज्जोच्छ्रि( $Dn_2$ °ज्जोद्धृ-; $D_7$ °ज्जोद्धु-; $D_8$ °ज्जाद्धु )तमांस°; $K_5$ $D_3$ नरास्थिमज्जोद्धृतमांस°; $D_1$ नरेंद्रछत्रोद्धृतहंसशोणा; Ś$_1$ as in text. Cc cites उद्धृतं ( cf. $K_3$ $D_{2.6}$ ).

123 $^a$ ) S °णभूत( $M_2$ °फेन )जुष्टां. — $M_2$ om. $123^b$–$124^d$. — $^b$ ) $Dn_2$ $D_2$ °कपालांकुश°. A few MSS. °शाड्वलां. — $^c$ ) Ś$_1$ $G_3$ $M_{1.3-5}$ शरीरसंघाटसहस्र-वाहिनीं ( Ś$_1$ °नी ); $K_4$ °संपातसहस्रवाहिनी; $B_{2.4}$ $D_3$ Dn $D_{4.5.7.8}$ °संघातसहस्र( $Da_1$ $D_5$ °शरीर )मालिनी;

शिरःकपालाकुलकेशशाद्वला ।
शरीरसंघातसहस्रवाहिनी
विशीर्णनानाकवचोर्मिसंकुला ॥ १२३
नराश्वनागास्थिनिकृत्तशर्करा
विनाशपातालवती भयावहा ।
तां कङ्कमालावृतगृध्रकह्वैः
क्रव्यादसंघैश्च तरक्षुभिश्च ॥ १२४
उपेतकूलां ददृशुः समन्ता-
त्क्रूरां महावैतरणीप्रकाशाम् ।
प्रवर्तितामर्जुनबाणसंघै-
र्मेदोवसासृक्प्रवहां सुभीमाम् ॥ १२५
ते चेदिपाञ्चालकरूषमत्स्याः
पार्थाश्च सर्वे सहिताः प्रणेदुः ।
वित्रास्य सेनां ध्वजिनीपतीनां
सिंहो मृगाणामिव यूथसंघान् ।
विनेदतुस्तावतिहर्षयुक्तौ
गाण्डीवधन्वा च जनार्दनश्च ॥ १२६
ततो रविं संहृतरश्मिजालं

C. 6. 2642
B. 6. 59. 131
K. 6. 59. 132

---

T1 G2.4 °संघट्टसहस्रवाहिनीं. — $^{d}$) Ko विशीर्णवाता कवचो°; B2.4 D (except D2.3.6) S (M2 om.) विकीर्णनानाक( M4 °र )वचोर्मिसंकुला (S °लां).

124 M2 om. 124 (cf. v. l. 123). — $^{a}$) Ś1 K3 D6 °स्थि( D6 °रि )शरीरशर्करा; Ko-2 नरास्थिनागाश्वशरीर( K2 °निकृत्त )शर्करा; K5 D2 नराश्च नागाश्वशरीरसंकुला (K5 °कर्करा); D1 नराश्वनागाश्च निकृत्तशर्करा; D3 निकृत्तनागाश्वनरास्थिशर्करा; D5 नराश्च नागास्थिनिकृत्त°; S (M2 om.) °श्वनागा( M3.5 °ना )स्थिनिकृत्तशर्करां. Cc cites शर्कराः; Cd शर्करा. — K4 B Da1 Dn D4.7.8 om. $124^{b}$. — $^{b}$) D1 निपातपातालवती; S (M2 om.) विनाश( T2 °राज )पातालवतीं. Cc cites विनाशः. Cc.d cite पाताल-. T G भयावहां; M (M2 om.) °नकां. Cv विनाशपालालवती भयावहा. — D5 om. $124^{cd}$. — $^{c}$) Ko.1 तं कंकमालावृकगृध्र°; K2 B1.2.4 Da Dn D4.7.8 गोमायुशालावृककंकगृध्रैः (K2 B1.4 °गृध्रकाकैः; B2 Da Dn1 °गृध्रकंकैः); K3.5 D2.6 तां काकशालावृकगृध्रकं( D2 °पं )कैः; K4 तां कंकशालावृककंकगृध्रैः; B3 तां कंकशालावृकगृध्रकाकैः; D1 पीनाश्वशालावृकगृध्रकंकैः; D3 श्वकाकशालावृकगृध्रकंकैः; T श्वकंकमालावृक( T1 °त )गृध्रकाकैः; G1-3 श्वकाकमालाकुल( G3 °वृत )गृध्रकंकैः; G4 श्वकंकमालावृतगृध्रकंकैः; M1.3-5 श्वकंकमालाकुल( M4 °वृक )गृध्रकह्वैः; Ś1 as in text. Cc.d cite शालावृका[:]. — $^{d}$) Ko क्रव्यादसंज्ञैश्च. K1.2 तरक्ष°; K3 D6 तिरक्षु° (for तरक्षु°). S (M2 om.) तरक्षुभिर्भूतगणैश्च जुष्टां.

125 S transp. $125^{a}$ and $125^{b}$. — $^{a}$) T G2-4 न्यपेत°; G1 M2 अपेत°. All MSS. except Ś1 Ko-2 मनुष्याः (for समन्तात्). — D5 om. $125^{b}$. — $^{b}$) Ś1 Ko-2 °णिप्रकाशां; D1 °णीव साक्षात्. — $^{c}$) K5 प्रवर्तितान्. — After 125, N ins.:

209* हतप्रवीरां च तथैव दृष्ट्वा
सेनां कुरूणामथ फल्गुनेन ।

[(L. 2) Only Ś1 K1 फल्गु°; Ko.2 फाल्गुणेन; the rest फाल्गुनेन.]

126 $^{a}$) K1 D3.7 चेदिपंचाल°; D1 चेदिपांचालकसोमकाश्च; S चेदि( T2 चापि )पांचाल( M4 °ल्य )करूश( T2 °प )मत्स्याः (G2 °मात्स्याः). — $^{b}$) Ś1 Ko-2.5 D2.6 सहसा; M1 प्रतराः (for सहिताः). K5 प्रणेमुः; S प्रतेरुः (G2 °चेरुः; G3 °तेपुः). — After $126^{ab}$, N (except D2) ins.:

210* जयप्रगल्भाः पुरुषप्रवीराः
संतापयन्तः कुरुयोधवीरान् ।

[(L. 1) Ś1 जयप्रवृद्धाः; Ko जये प्रगृ( m °वृ )द्धाः; K1 जयप्रगृद्धाः; K2 जये प्रवृद्धाः. — (L. 2) Ś1 संथाप°; K4 B Da Dn D1.3-3 संत्रास° (for संताप°). Ś1 कुरुवृद्धवीरान्; K4 B1.2.4 Dn2 D3.4.7.8 कुरुवीरयोधान्; D1 कुरुयोधमुख्यान्; D6 कुरुयोधयोधान्.]

— K4 B Da Dn D4.5.7.8 cont.: S ins. after $126^{ab}$:

211* हतप्रवीराणि बलानि दृष्ट्वा
किरीटिना शत्रुभयावहेन ।

— $^{c}$) K5 वित्रश्च सेनां (sic); D1 विभ्रंस्य सेनां; T1 G4 वित्रस्यमाना; T2 G1-3 M2 वित्रास्यमाना; M1.3-5 वित्रास्यमाणा( M1.4 °ना )न्. T G ध्वजिनी परेषां. — $^{d}$) Ś1 Ko.2 सिंहा. S यथा मृगें( T1 G4 महें )द्रेण हि मार्गसंघान् (T2 °घाः). — After $126^{cd}$, S ins.:

212* हतद्रुतां तव पुत्रस्य सेनां
दृष्ट्वा तदा भारतवृष्णिसिंहौ ।

C. 6. 2642
B. 6. 59. 131
K. 6. 59. 132

दृष्ट्वा भृशं शस्त्रपरिक्षताङ्गाः ।
तदैन्द्रमस्त्रं विततं सुघोर-
मसह्यमुद्वीक्ष्य युगान्तकल्पम् ॥ १२७
अथापयानं कुरवः सभीष्माः
सद्रोणदुर्योधनबाह्लिकाश्च ।
चक्रुर्निशां संधिगतां समीक्ष्य
विभावसोर्लोहितराजियुक्ताम् ॥ १२८
अवाप्य कीर्तिं च यशश्च लोके
विजित्य शत्रूंश्च धनंजयोऽपि ।
ययौ नरेन्द्रैः सह सोदरैश्च
समाप्तकर्मा शिबिरं निशायाम् ।
ततः प्रजज्ञे तुमुलः कुरूणां
निशामुखे घोरतरः प्रणादः ॥ १२९
रणे रथानामयुतं निहत्य
हता गजाः सप्तशतार्जुनेन ।
प्राच्याश्च सौवीरगणाश्च सर्वे
निपातिताः क्षुद्रकमालवाश्च ।
महत्कृतं कर्म धनंजयेन
कर्तुं यथा नार्हति कश्चिदन्यः ॥ १३०
श्रुतायुरम्बष्ठपतिश्च राजा
तथैव दुर्मर्षणचित्रसेनौ ।
द्रोणः कृपः सैन्धवबाह्लिकौ च
भूरिश्रवाः शल्यशलौ च राजन् ।
स्वबाहुवीर्येण जिताः सभीष्माः

---

— $^e$) Ś$_1$ विरेजतुस्. S तावति ( M$_{1. 3. 5}$ °वथ; M$_4$ °नथ ) हृष्यमाणौ. — $^f$) K$_5$ D$_2$ गांजीव°.

127 $^a$) K$_0$ संहृतिरश्मि°; K$_1$ संहितरश्मि°; K$_3$ संवृतिरश्मि°; K$_4$ B D ( except D$_{1-3}$ ) संवृतरश्मि°; T$_2$ संवृतरश्मिमालिनं; G$_1$ संहृतरश्मिमालिं. — $^b$) T$_1$ G$_4$ परैः; G$_{1. 3}$ रविं; G$_2$ परे ( for भृशं ). Ś$_1$ शस्त्रपरिक्ृतांगाः; K$_{0. 2}$ °परिक्षतांगां ( K$_0$ °गः ); K$_5$ M$_3$ °परिक्षितांगाः; Da$_1$ D$_{6. 8}$ °परीक्षतांगाः. — $^c$) K$_2$ तदेंद्रमस्त्रं; S तमैंद्रम( G$_2$ °श )स्त्रं. K$_4$ B D ( except D$_{1. 2. 6}$ ) च ( for सु- ). — $^d$) T$_2$ अवश्यम्; M$_{3. 5}$ असंह्यम्.

128 $^a$) Ś$_1$ अथोपयानं; K$_1$ यथापयानं; K$_5$ अप्यावयानं; B$_{2. 3}$ तथापयानं; D$_2$ अथापयानाः; S अथापहारं. — $^b$) K$_1$ °बाह्लिकां च. — $^c$) Dn$_1$ ( marg. ) जग्मुर् ( for चक्रुर् ). M$_4$ निशा. B$_2$ Da$_1$ संधिमतीं; T$_2$ सर्वगतां; G$_3$ सिंधुगतां; M$_{1-3. 5}$ संध्यगतां; M$_4$ संधिगतं; Cc °गतां ( as in text ). Ca. d cite संधिः. D$_2$ G$_3$ M$_{3. 5}$ निरीक्ष्य. — $^d$) K$_{4. 5}$ B Da Dn D$_{1. 4-8}$ विभावसोर्लो( D$_1$ °सुं लो )हितरागयुक्तां; S विभावसुं लोहितराजि( T$_1$ G$_{2. 4}$ M$_2$ °रश्मि )युक्तं. — After 128, Da Dn$_1$ D$_5$ ins. :

213* रराज चारक्तदिगन्तरालं
सशोणमत्यर्थरथाङ्गनाम्नः ।
ह्रदः प्रभिन्नादिव शोणितौघै-
र्विलिप्तवन्तः सकलं वियोगात् ।

129 $^a$) B$_2$ D$_2$ अपास्य. — $^b$) Da Dn D$_{4. 5. 7. 8}$ G$_{1-3}$ M$_1$ विसृद्य; D$_3$ निर्जित्य; T$_1$ G$_4$ विसृज्य; M$_{2-5}$ विसृश्य ( for विजित्य ). K$_5$ धनंजयश्च. — $^c$) Dn$_2$ D$_{2. 4. 7. 8}$ T$_1$ G$_{3. 4}$ नरेंद्रः. — $^d$) D$_1$ प्रमुखे ( for शिबिरं ). — After 129$^{cd}$, D$_1$ ins. :

214* दुर्योधनः प्रव्यथितान्तरात्मा
ययौ तदा प्रेक्ष्य तदाजिमध्ये ।

— $^e$) K$_{3. 5}$ D$_{2. 3. 5}$ तुमलः; G तुमुलं. — $^f$) K$_{2. 4}$ B D ( except D$_{2. 6. 7}$ ) T$_2$ G$_{1. 3}$ M$_4$ घोरतमः.

130 $^b$) D$_{4. 7. 8}$ गजा हताः ( by transp. ). K$_3$ D$_5$ °शता नरेण. S हत्वा गजानां च श( M$_{1-3. 5}$ °नामयु )तानि सप्त. — D$_2$ om. 130$^{cd}$. — $^c$) Ś$_1$ K$_{0-2}$ तत्र ( for सर्वे ). — $^d$) K$_4$ विशातिताः ( for निपा° ). — $^e$) K$_1$ धर्म ( for कर्म ).

131 D$_2$ om. 131$^{ab}$. — $^a$) D ( except D$_{1. 3. 6}$; D$_2$ om. ) राजंस् ( for राजा ). — $^b$) S तथा च ( for तथैव ). Ś$_1$ दुर्दर्शन°; K$_{3. 5}$ दुर्धर्षण°. — $^c$) M$_4$ द्रौणिः ( for द्रोणः ). — $^d$) D$_6$ भुरि°. Ś$_1$ D$_{2. 3}$ T$_1$ G$_4$ शलशल्यौ. — After 131$^{cd}$, N ins. :

215* अन्ये च योधाः शतशः समेताः
क्रुद्धेन पार्थेन रणस्य मध्ये ।
[ ( L. 2 ) Ś$_1$ D$_2$ रणाजिमध्ये; K$_0$ नराजिमध्ये; K$_{2. 3. 5}$ D$_3$ वराजिमध्ये; D$_6$ च राजिमध्ये. ]

किरीटिना लोकमहारथेन ॥ १३१

इति ब्रुवन्तः शिविराणि जग्मुः

सर्वे गणा भारत ये त्वदीयाः ।

उल्कासहस्रैश्च सुसंप्रदीप्तै-

र्विभ्राजमानैश्च तथा प्रदीपैः ।

किरीटिवित्रासितसर्वयोधा

चक्रे निवेशं ध्वजिनी कुरूणाम् ॥ १३२

इति श्रीमहाभारते भीष्मपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

# ५६

संजय उवाच ।

व्युष्टां निशां भारत भारताना-

मनीकिनीनां प्रमुखे महात्मा ।

ययौ सपत्नान्प्रति जातकोपो

वृतः समग्रेण बलेन भीष्मः ॥ १

तं द्रोणदुर्योधनबाह्लिकाश्च

तथैव दुर्मर्षणचित्रसेनौ ।

जयद्रथश्चातिबलो बलौघै-

C. 5.2652
B. 6.60.2
K. 6.60.2

— After 131[cd], $Da_2$ $D_{5.7}$ ins.:

216* अहो प्रयात्येष गजेन्द्रवृन्दैः

संवेष्टितः पाण्डवबाणभिन्नः ।

दुर्योधनश्चन्द्रसमानशोभिना

तिर्यग्धृतेनातपत्रेण मन्दः ।

132 [a]) $D_1$ द्रवंतः; $M_{1-3.5}$ ब्रुवाणाः. — [b]) $M_1$ गुणा; $M_2$ हत्वा (for गणा). — [c]) $D_2$ °स्रैस्तु. — [d]) $K_2$ °मानाश्च; Da $Dn_1$ $D_{1.5}$ $M_5$ °माणैश्च. $B_3$ $D_{1.2}$ तथा प्रदीप्तैः; $T_1$ G सुसंप्रदीप्तैः. — [e]) $D_1$ किरीटिविभ्राजित°; $D_2$ °टिना त्रासित°. $Ś_1$ $K_3$ $D_2$ -योधाश्. — [f]) T $G_4$ $M_4$ जग्मुर्; $G_{1.3}$ जग्मे; $G_2$ जहे (for चक्रे). $K_4$ रथानां; $D_1$ प्रवेशं (for कुरूणाम्). — After 132, $D_1$ ins.:

217* भग्नेन दर्पेण महारथानां

विध्वस्तवक्राश्च महारथद्विपाः ।

Colophon. — *Sub-parvan :* Omitting sub-parvan name, $Ś_1$ $K_{0-3.5}$ $D_{2.6}$ mention only तृतीय( $K_5$ °यो )युद्धदिवस; $K_4$ तृतीयेह्नि and तृतीययुद्धदिवस; $B_2$ $D_5$ $M_{3-5}$ तृतीयाह्निक; $B_3$ तृतीयदिवससंग्रामादिकं; Da $D_1$ $Dn_1$ $D_3$ $M_2$ तृतीयमहः; $Dn_2$ तृतीयदिवसयुद्ध; $D_7$ has the figure 3 (for तृतीय); $D_{4.8}$ तृतीयदिनयुद्ध; तृतीयदिवस; T G तृ( $T_2$ $G_3$ द्वि )तीयापहार; $M_1$ तृतीयाह. $K_{0.4}$ $B_3$ $D_{4.8}$ S cont. समाप्त. — *Adhy. name :* $K_4$ कुरुपराजयः; $T_2$ क्रोधोद्यमः; $G_{1.3}$ चक्रोद्धारः ( $G_1$ °रं ); $G_2$ चक्रोद्धारणः; $M_{1.2.4}$ चक्रोद्यमः ( $M_4$ °द्यमनः ). — *Adhy. no.* ( figures, words or both ): $K_5$ $T_2$ $M_{3.4}$ 56; $Da_2$ ( *sec. m.* ) 17; $Dn_2$ $M_5$ 57; $D_1$ 58; $T_1$ G 54; $M_{1.2}$ 55 ( as in text ). — *Śloka no.:* $Dn_1$ 141; $Dn_2$ 136; $D_5$ 45 ( = 145 ).

## 56

☞ $D_2$ om. this adhy.

1 [a]) $K_{0-2}$ $D_3$ $M_{3.5}$ व्युष्टा निशा; $Ca.c$ व्युष्टां निशां ( as in text ). B M भारतीनाम्. Cd as in text. — [b]) $G_1$ प्रथमो; $G_3$ प्रमुखो; Cc प्रमुखे ( as in text ). — [c]) $K_1$ $M_{3.5}$ सपत्नं; $K_4$ स शत्रून्; $B_2$ ससान्. $K_4$ °रोषः ( for °कोपो ). — [d]) $Ś_1$ $K_{0-2.4.5}$ $D_{1.3}$ प्रीतः; $B_{2.4}$ $Dn_2$ $D_{4.8}$ ततः; $B_3$ हृष्टः ( for वृतः ). $K_{0-2}$ समं द्रोण- ( for समग्रेण ).

2 [a]) $Ś_1$ ते ( for तं ). $B_3$ -बाह्लीकाश्च. — [b]) $Ś_1$ $K_{1.5}$ दुर्धर्षण°; $D_3$ °चित्रसेनाः. — [c]) $K_5$ चापि ( for चाति- ). — [d]) $Ś_1$ $K_{0.1}$ वृतास् ( for नृपास् ). Ko [ऽ]न्वययुः; $K_2$ न ययुः; $K_{3.4}$ B Da Dn $D_{1-3}$ Cc प्र( $B_3$ च )ययुः; $D_3$ $T_1$ $G_4$ $M_{3.5}$ [ऽ]पि ययुः; $G_{1-3}$ $M_{1.2.4}$ [ऽ]भिययुः. T G समस्ताः.

C. 6. 2652
B. 6. 60. 2
K. 6. 60. 2

नृपास्तथान्येऽनुययुः समन्तात् ॥ २
स तैर्महद्भिश्च महारथैश्च
तेजस्विभिर्वीर्यवद्भिश्च राजन् ।
रराज राजोत्तम राजमुख्यै-
र्वृतः स देवैरिव वज्रपाणिः ॥ ३
तस्मिन्ननीकप्रमुखे विषक्ता
दोधूयमानाश्च महापताकाः ।
सुरक्तपीतासितपाण्डुराभा
महागजस्कन्धगता विरेजुः ॥ ४
सा वाहिनी शांतनवेन राज्ञा
महारथैर्वारणवाजिभिश्च ।
बभौ सविद्युत्स्तनयित्नुकल्पा
जलागमे द्यौरिव जातमेघा ॥ ५
ततो रणायाभिमुखी प्रयाता
प्रत्यर्जुनं शांतनवाभिगुप्ता ।
सेना महोग्रा सहसा कुरूणां
वेगो यथा भीम इवापगायाः ॥ ६
तं व्यालनानाविधगूढसारं
गजाश्वपादातरथौघपक्षम् ।
व्यूहं महामेघसमं महात्मा
ददर्श दूरात्कपिराजकेतुः ॥ ७
स निर्ययौ केतुमता रथेन
नरर्षभः श्वेतहयेन वीरः ।
वरूथिना सैन्यमुखे महात्मा

---

3 D5 om. 3. — a) K4 एतैर्; T1 G2. 4 शरैर्; T2 सुतैर्; G1. 3 M4 शनैर् (for स तैर्). K4 व्रज- द्भिश्च. — b) B3 वीरतमैश्च; D1 वीर्यधनैश्च. — c) T G राजा (T2 °ज्ञां) तु स; M भीष्मस्तु स; Cc राजोत्तम (as in text). B1. 2. 4 Da Dn D4. 7. 8 S राजमध्ये (for °मुख्यैर्). — d) K4 वृत्तं (for वृतः). K3. 5 D6 सु(D6 स)घोरैर्; D3 सुरौघैर् (for स देवैर्). D1 चक्र° (for वज्र°). B1. 2. 4 Da Dn D4. 7. 8 S मध्ये (B2 Da Dn1 प्रभुः; B4 संख्ये) सुराणामिव देव(D8 [before corr.] धर्म)राजः.

4 a) K1 विशक्ता; K5 Dn2 विमुक्ता; Da D5. 6 विसक्ता; Cc विषक्ता (as in text). — b) S वितताः (for च महा-). Ś1 K0–3. 5 D1. 3. 6 विरेजुरत्यर्थमहा- वितानाः. — c) K0 सुरक्तपीता भृशपांडुराभा; K1 °पीताभ्रशुपांडराभा; K2. 3 °पीताशितपांडु°; Dn2 °पीता- रुणपांडु°; D1 °पीतासितपांडुराश्च; T1 G1. 2. 4 M1. 3–5 °पांडराभा; T2 °पांडुरागा. — d) Ś1 K0. 1 °स्कंदगताः; B4 °स्कंधगजा. Ś1 K0–3. 5 D1. 3. 6 पताकाः (for विरेजुः).

5 a) K0 स (for सा). Dn1 D3. 6 S गुप्ता (for राज्ञा). — b) K0. 2 वारणवाजिनीभिः; K5 वारणवाजि- संघैः; D1 वाजिभिर्वारणैश्च. — c) G1. 3 बभूव (for बभौ स-). K2 -स्तनयत्नकल्पा; K3 -स्तनयित्नुकल्पैर्; S -स्तनयित्नुघोषा. — d) K0–2 जगाम सा; K5 जलाग- मैर्; Da1 D5. 8 (sup. lin. as in text) जलाद्यमे; G3 जवागमे. K2. 5 D6 जातमेघाः.

6 a) K0 D3 °भिमुखा; Cc °मुखी (as in text). — b) D1 शांतनवेन गुप्ता; D3 °नवाभिगुप्ताः. — c) K4 B1. 2. 4 Da Dn D4. 5. 7. 8 S ससार सेना; B3 सेना ससार; D3 सेना समग्रा. Cc cites ससार. — d) D1 इवापगानां. — After 6, M4 ins.:

218* अतः परं व्यूहमचिन्त्यरूपं
निवेशयामास महाधनुष्मान् ।

7 a) Ś1 ते तु नानाविधगूडसारं; K0 तं व्याधुनोना- विधगूढ° (sic); K1 तं व्यादुमोनाविदिगूड° (corrupt); K2 तं व्यालनानाविधिगूढ°; K3. 5 D6 तं व्याद(K5 °ध)नानाविधगू(D6 °रू)ढ°; K4 तं व्यालनानाविधशूरं; B2 तव्यापिनानाविध° (sic); Da D5 तद्व्यालनानाविध°; D1 तं व्यात्तनानाविधगूढ°; T1 G तं व्यूढनानाद्विपगूढसारं (G2 °रां); Ca as in text. Cc. d cite व्याल-. Cc cites नानाविधः, गूढः and सारः. — b) K3 गदा- श्वपादात°; Da1 D5. 8 गजाश्वपादातरथौघपक्षी; D3 °रथौ- घवृंदं; T1 G M वरा(M3–5 परा)श्वपादातरथौघयुक्तं (G2 °क्तां); T2 नानाश्वपादातरथौघरक्तं. Cc cites गजा- and पक्षः. — c) Da1 D3 T1 G4 व्यूढं; G3 व्यूढां (for व्यूहं). D1 महामेघसहो; T1 G °मेघ(G3 °वेग)- निभं. — K0. 1 om. (hapl.) 7d–8c. — d) K3 °राजहेतु.

8 K0. 1 om. 8abc (cf. v. l. 7). — a) K3 D1 (also as in text). 7. 8 तं; Dn2 D1. 6 वि- (for स). — b) Dn2 श्वेतरथेन; D1 श्वेतहयो नृ-. S काले (for वीरः). — c) Cd वरूथिना (as in text). K2. 4

